***सासहिवावहिचाचलिपापतीनामुपसंख्यानम्*** (वा) ॥ यङन्तेभ्यः सहेत्यादिभ्यः किकिनौ पतेर्नीगभावश्च निपात्यते ॥

## 3152: स्वपितृषोर्नजिङ् (3.2.172)

स्वप्नक् । तृष्णक् । तृष्णजौ । तृष्णजः । धृषेश्चेति वाच्यमिति काशिकादौ । धृष्णक् ॥

## 3153: शृवन्द्योरारुः (3.2.173)

शरारूः । वन्दारुः ॥

## 3154: भियः क्रुक्लुकनौ (3.2.174)

भीरुः । भीलुकः ॥ ***क्रुकन्नपि वाच्यः*** (वा) ॥ भीरुकः ॥

## 3155: स्थेशभासपिसकसो वरच् (3.2.175)

स्थावरः । ईश्वरः । भास्वरः । पेस्वरः । कस्वरः ॥

## 3156: यश्च यङः (3.2.176)

यातेर्यङन्ताद्वरच् स्यात् । अतो लोपः [2380] । तस्य अचः परस्मिन् [50] इति स्थानिवद्भावे प्राप्ते पदस्य चरमावयवे द्विर्वचनादौ च कर्तव्ये परनिमित्तोऽजादेशे न स्थानिवत् तस्य यलोपं प्रति स्थानिवद्भावनिषेधात् लोपो व्योः--- [873] इति यलोपः । अल्लोपस्य स्थानिवत्त्वामाश्रित्य आतो लोपे प्राप्ते । वरे लुप्तं न स्थानिवत् । यायावरः ॥

## 3157: भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् (3.2.177)

विभ्राट् । भाः । भासौ । धूः । धुरौ । विद्युत् । ऊर्क् । पूः । पुरौ । दृशिग्रहणस्यापकर्षाज्जवतेर्दीर्घः । जूः । जुवौ । जुवः । ग्रावशब्दस्य धातुना समासः सूत्रे निपात्यते । ततः क्विप् । ग्रावस्तुत् ॥

## 3158: अन्येभ्योऽपि दृश्यते (3.2.178)

क्विप् । छित् । भिद् । दृशिग्रहणं विध्यन्तरोपसंग्रहार्थम् । क्वचिद्दीर्घः क्वचिदसंप्रसारणं क्वचिद्द्वे क्वचिद्ध्रस्वः । तथा च वार्तिकम् ॥ ***क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च*** (वा) ॥ क्विब्वचीत्यादिना उणादिसूत्रेण केषांचित्सिद्धे तच्छीलादौ तृना बाधा मा भूदिति वार्तिके ग्रहणम् । वक्तीति वाक् । पृच्छतीति प्राट् । आयतं स्तौतीति आयतस्तूः । कटं प्रवते कटप्रूः । जूरुक्तः । श्रयति हरिं सा श्रीः ॥ ***द्युतिगमिजुहोतीनां द्वे च*** (वा) ॥ दृशिग्रहणादभ्याससंज्ञा । दिद्युत् । जगत् ॥ ***जुहोतेर्दीर्घश्च*** (वा) ॥ जुहूः । दॄ भये । अस्य ह्रस्वश्च । दीर्यति ददृत् ॥ ***ध्यायतेः संप्रसारणं च*** (वा) ॥ धीः ॥

## 3159: भुवः संज्ञान्तरयोः (3.2.179)

मित्रभूर्नाम कश्चित् । धनिकाधमर्णयोरन्तरे यस्तिष्ठति विश्वासार्थं स प्रतिभूः ॥

## 3160: विप्रसंभ्यो ड्वसंज्ञायाम् (3.2.180)

एभ्यो भुवो डुः स्यान्न तु संज्ञायाम् । विभूर्व्यापकः । प्रभुः स्वामी । संभुर्जनिता । संज्ञायां तु विभूर्नाम कश्चित् ॥ ***मितद्र्वादिभ्य उपसंख्यानम्*** (वा) ॥ मितं द्रवतीति मितद्रुः । शतद्रुः । शंभुः । अन्तर्भावितण्यर्थोऽत्र भवतिः ॥

## 3161: धः कर्मणि ष्ट्रन् (3.2.181)

धेटो धाञश्च कर्मण्यर्थे ष्ट्रन् स्यात् । धात्री जनन्यामलकीवसुमत्युपमातृषु ॥

## 3162: दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे (3.2.182)

दावादेः ष्ट्रन् स्यात्करणेऽर्थे । दान्त्यनेन दात्रम् । नेत्रम् ॥

## 3163: तितुत्रतथसिसुसरकसेषु च (7.2.9)

एषां दशानां कृत्प्रत्ययानामिण्न स्यात् । शस्त्रम् । योत्रम् । योक्त्रम् । स्तोत्रम् । तोत्रम् । सेत्रम् । सेक्त्रम् । मेढ्रम् । पत्रम् । दंष्ट्रा । नद्ध्री ॥

## 3164: हलसूकरयोः पुवः (3.2.183)

पूङ्पूञोः करणे ष्ट्रन् स्यात् तच्चेत्करणं हलसूकरयोरवयवः । हलस्य सूकरस्य वा पोत्रम् । मुखमित्यर्थः ॥

## 3165: अर्तिलूधूसूखनसहचर इत्रः (3.2.184)

अरित्रम् । लवित्रम् । धवित्रम् । सवित्रम् । खनित्रम् । सहित्रम् । चरित्रम् ॥

## 3166: पुवः संज्ञायाम् (3.2.185)

पवित्रम् । येनाज्यमुत्पूयते यच्चानामिकावेष्टनम् ॥

## 3167: कर्तरि चर्षिदेवतयोः (3.2.186)

पुव इत्रः स्यात् ऋषौ करणे देवतायां कर्तरि । ऋषिर्वेदमन्त्रः । तदुक्तमृषिणेति दर्शनात् । पूयतेऽनेनेति पवित्रम् ॥ देवतायां त्वग्निः पवित्रं स मा पुनातु ॥

*। इति पूर्वकृदन्तप्रकरणम् ।*

# ॥ अथ उणादिप्रकरणम् ॥

## उ1: कृवापाजिमिस्वदिसाध्यशूभ्य उण् (9.1.1)

करोतीति कारुः शिल्पी कारकश्च । आतो युक् [2761] वातीति वायुः । पायुर्गुदम् । जयत्यभिभवति रोगान् जायुरौषधम् । मिनोति प्रक्षिपति देहे ऊष्माणमिति मायुः पित्तम् । स्वादुः । साध्नोति परकार्यं साधुः । अश्नुते आशु शीघ्रम् । आशुर्व्रीहिः पाटलः स्यात् ।

### उ2: छन्दसीणः (9.1.2)

मा न आयौ ।

### उ3: दृसनिजनिचरिचटिभ्यो ञुण् (9.1.3)

दीर्यत इति दारु । स्नुः प्रस्थः सानुरस्त्रियाम् । जानु । जानुनी । इह जनिवध्योश्च [2512] इति न निषेधः । अनुबन्धद्वयसामर्थ्यात् । चारु रम्यम् । चाटु प्रियं वाक्यम् । मृगय्वादित्वात्कुप्रत्यये चटु इत्यपि ।

### उ4: किञ्जरयोः श्रिणः (9.1.4)

किं श्रृणोतीति किंशारुः सस्यशूकं बाणश्च । जरामेति जरायुर्गर्भाशयः । गर्भाशयो जरायुः स्यात् ।

### उ5: त्रो रश्च लः (9.1.5)

तरन्त्यनेन वर्णा इति तालुः ।

### उ6: कृके वचः कश्च (9.1.6)

कृकेन गलेन वक्तीति कृकवाकुः । 'कृकवाकुर्मयूरे च सरटे चरणायुधे' इति विश्वः ।

### उ7: भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः (9.1.7)

भरति बिभर्ति वा भरुः, स्वामी हरश्च । म्रियन्तेऽस्मिन्भूतानि मरुर्निर्जलदेशः । शेते शयुरजगरः । तरुर्वृक्षः । चरन्ति भक्षयन्ति देवता इममिति चरुः । त्सरुः खड्गादिमुष्टिः । तनु स्वल्पम् । तन्यते कर्मपाशोऽनया इति तनुः, शरीरं च । स्त्रियां मूर्तिस्तनुस्तनूः । धनुः शस्त्रविशेषः । धनुषा च धनुं विदुः । धनुरिवाजनि वक्र इति श्रीहर्षः । मयुः किंनरः । मद्गुः पानीयकाकिकेति रभसः । न्यङ्क्वादित्वात्कुत्वम् जश्त्वेन सस्य दः ।

### उ8: अणश्च (9.1.8)

लवलेशकणाणवः । चात्कटिवटिभ्याम् । कटति रसनां कटुः । वटतीति वटुः ।

### उ9: धान्ये नित् (9.1.9)

धान्ये वाच्येऽण उप्रत्ययः स्यात् स च नित् । नित्त्वादाद्युदात्तः । प्रियङ्गवश्च मेऽणवश्च मे । व्रीहिभेदस्त्वणुः पुमान् । निद्ग्रहणं फलिपाटीत्यादिसूत्रमभिव्याप्य संबध्यते ।

### उ10: शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च (9.1.10)

शृणातीति शरुः । शरुरायुधकोपयोः । स्वर्यन्ते प्राणा अनेन स्वरुर्वज्रम् । स्नेहुर्व्याधिः । चन्द्र इत्यन्ये । त्रपु सीसम् । पुंसि भूम्न्यसवः प्राणाः । वसुर्हृदेऽग्नौ योक्त्रेंऽशौ वसु तोये धने मणौ । हनुर्वक्त्रैकदेशः । क्लेदुश्चन्द्रः । बन्धुः । मनुः । चात् बिदि अवयवे । बिन्दुः ।

### उ11: स्यन्देः संप्रसारणं धश्च (9.1.11)

देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियामित्यमरः ।

**उ12: उन्देरिच्चादेः (9.1.12)**

उनत्ति इन्दुः ।

**उ13: ईषेः किच्च (9.1.13)**

ईषेरुः स्यात्स च कित् आदेरिकारादेशश्च । ईषते हिनस्ति इषुः शरः । इषुर्द्वयोः ।

**उ14: स्कन्देः सलोपश्च (9.1.14)**

कन्दुः ।

**उ15: सृजेरसुम् च (9.1.15)**

चात्सलोप उप्रत्ययश्च । रज्जुः ।

**उ16: कृतेराद्यन्तविपर्ययश्च (9.1.16)**

ककारतकारयोर्विनिमयः । तर्कुः सूत्रवेष्टनम् ।

**उ17: नावञ्चेः (9.1.17)**

न्यङ्क्वादित्वात्कुत्वम् । नियतमञ्चति न्यङ्कुर्मृगः ।

**उ18: फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च (9.1.18)**

फलेर्गुक् । फल्गु । पाटेः पटिः । पाटयतीति पटुः । नम्यतेऽनेन नाकुर्वल्मीकम् । मन्यते इति मधु । जायते इति जतु ।

**उ19: वलेर्गुक्च (9.1.19)**

वल संवरणे ।

**उ20: शः कित्सन्वच्च (9.1.20)**

श्यतेरुः स्यात्स च कित्सन्वच्च । शिशुर्बालः ।

**उ21: यो द्वे च (9.1.21)**

ययुरश्वोऽश्वमेधीयः । सन्वदिति प्रकृते द्वेग्रहणमित्वनिवृत्त्यर्थम् ।

**उ22: कुर्भ्रश्च (9.1.22)**

बभ्रुर्मुन्यन्तरे विष्णौ बभ्रू नकुलपिङ्गलौ । चादन्यतोऽपि । चक्रुः कर्ता । जघ्नुर्हन्ता । पपुः पालकः ।

**उ23: पृभिदिव्यधिगृधिधृषिभ्यः (9.1.23)**

कुः स्यात् । पुरुः । भिनत्ति भिदुर्वज्रम् । ग्रहिज्या- [2412] इति संप्रसारणम् । विरहिणं विध्यति विधुः । विधुः शशाङ्के कर्पूरे हृषीकेशे च राक्षसे । गृधुः कामः । धृषुर्दक्षः ।

**उ24: कृग्रोरुच्च (9.1.24)**

करोतीति कुरुः । गृणाति गुरुः ।

**उ25: अपदुःसुषु स्थः (9.1.25)**

सुषामादिषु च- [1022] इति षत्वम् । अपष्ठु प्रतिकूलम् । दुष्ठु । सुष्ठु ।

**उ26: रपेरिच्चोपधायाः (9.1.26)**

अनिष्टं रपतीति रिपुः ।

**उ27: अर्जिदृशिकम्यमिपशियाधामृजिपसितुक्धुक्दीर्घहकाराश्च (9.1.27)**

अर्जयति गुणान् ऋजुः । सर्वानविशेषेण पश्यतीति पशुः । कन्तुः । अन्धुः कूपः । पांशुर्ना न द्वयो रजः । तालव्या अपि दन्त्याश्च सम्बसूकरपांसवः । बाधते इति बाहुः । बाहुः स्त्रीपुंसयोर्भुजः ।

**उ28: प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च (9.1.28)**

त्रयाणां कुः संप्रसारणं भ्रस्जेः सलोपश्च । पृथुः । मृदुः । न्यङ्क्वादित्वात्कुत्वम् । भृज्जति तपसा भृगुः ।

**उ29: लङ्घिबंह्योर्नलोपश्च (9.1.29)**

लघुः ॥ ***बालमूललघ्वलमङ्गुलीनां वा लो रत्वमापद्यते*** (वा) ॥ रघुर्नृपभेदः । बहुः ।

**उ30: ऊर्णोतेर्नुलोपश्च (9.1.30)**

ऊरुः सक्थि ।

**उ31: महति ह्रस्वश्च (9.1.31)**

उरु महत् ।

**उ32: श्लिषेः कश्च (9.1.32)**

श्लिष्यतीति श्लिकुर्भृत्यः । उद्यतो ज्योतिश्च ।

**उ33: आङ्परयोः खनिशृभ्यां डिच्च (9.1.33)**

आखनतीत्याखुः । परं शृणातीति परशुः । पृषोदरादित्वादकारलोपात्पर्शुरपि ।

**उ34: हरिमितयोर्द्रुवः (9.1.34)**

द्रु गतौ अस्मात् हरिमितयोरुपपदयोः कुः स च डित् । हरिभिर्द्रूयते हरिद्रुर्वृक्षः । मितं द्रवति मितद्रुः समुद्रः ।

**उ35: शते च (9.1.35)**

शतधा द्रवति शतद्रुः । बाहुलकात्केवलादपि । द्रवत्यूर्ध्वमिति द्रुर्वृक्षः शाखा च तद्वान् द्रुमः ।

## उ36: खरु शङ्कु पीयु नीलङ्गु लिगु (9.1.36)

पञ्चैते कुप्रत्ययान्ता निपात्यन्ते । खनते रेफश्चान्तादेशः । खरुः कामः क्रूरो मूर्खः अश्वश्च । शङ्कुर्ना कीलशल्ययोः ।

## उ37: मृगय्वादयश्च (9.1.37)

एते कुप्रत्ययान्ता निपात्यन्ते । मृगं यातीति मृगयुर्व्याधः । देवयुर्धार्मिकः । मित्रयुर्लोकयात्राभिज्ञः । आकृतिगणोऽयम् ।

## उ38: मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच् (9.1.38)

मन्दुरा वाजिशाला । वाशुरा रात्रिः । मथुरा । चतुरः । चङ्कुरो रथः । अङ्कुरः । खर्जूरादित्वादङ्कूरोऽपि ।

## उ39: व्यथेः संप्रसारणं किच्च (9.1.39)

विथुरश्चोररक्षसोः ।

## उ40: मुकुरदर्दुरौ (9.1.40)

मुकुरो दर्पणः । बाहुलकान्मकुरोऽपि । दॄ विदारणे । धातोर्द्विर्वचनमभ्यासस्य रुक् टिलोपश्च । दर्दुरस्तोयदे भेके वाद्यभाण्डाद्रिभेदयोः । दर्दुरा चण्डिकायां स्याद्ग्रामजाले च दर्दुरमिति विश्वः ।

## उ41: मद्गुरादयश्च (9.1.41)

उरजन्ता निपात्यन्ते । माद्यतेर्गुक् । मद्गुरो मत्स्यभेदः । कबृ वर्णे । रुगागमः । कर्बुरः श्वेतरक्षसोः । बध्नातेः खर्जूरादित्वादूरोऽपि । बन्धूरबन्धुरौ स्यातां नम्रसुन्दरयोस्त्रिषु इति रन्तिदेवः ॥ (ग) कोकतेर्वा कुक् च ॥ कुक्कुरः - कुकुरः ।

## उ42: असेरुरन् (9.1.42)

असुरः । प्रज्ञाद्यण् । आसुरः ।

## उ43: मसेश्च (9.1.43)

पञ्चमे पादे मसेरूरन्निति वक्ष्यते । मसूरा मसुरा व्रीहिप्रभेदे पण्ययोषिति । मसूरा मसुरा वा ना वेश्याव्रीहिप्रभेदयोः । मसूरी पादरोगे स्यादुपधाने पुनः पुमान् । मसूरमसुरौ च द्वाविति विश्वः ।

## उ44: शावशेराप्तौ (9.1.44)

शु इति आश्वर्थे । श्वशुरः । पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोरित्यमरः ।

## उ45: अविमह्योष्टिषच् (9.1.45)

अविषः । महिषः ।

**उ46: अमेर्दीर्घश्च (9.1.46)**

आमिषं त्वस्त्रियां मांसे तथा स्याद्भोग्यवस्तुनि ।

**उ47: रुहेर्वृद्धिश्च (9.1.47)**

रङ्कुशम्बररौहिषाः । रौहिषो मृगभेदे स्याद्रौहिषं च तृणं मतमिति संसारावर्तः ।

**उ48: तवेर्णिद्वा (9.1.48)**

तवेति सौत्रो धातुः । तविपताविषावब्धौ स्वर्गे च । स्त्रियां तविषी ताविषी नदी देवकन्या भूमिश्च । तविषी बलमिति वेदभाष्यम् ।

**उ49: नञि व्यथेः (9.1.49)**

अव्यथिषोऽब्धिसूर्ययोः । अव्यथिषी धरारात्र्योः ।

**उ50: किलेर्बुक् च (9.1.50)**

किल्बिषम् ।

**उ51: इषिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचिरुचिरुधिबन्धिशुषिभ्यः किरच् (9.1.51)**

इषिरोऽग्निः । मदिरा सुरा । मुदिरः कामुकाभ्रयोरिति विश्वमेदिन्यौ । खिदिरश्चन्द्रः । छिदिरोऽसिकुठारयोः । भिदिरं वज्रम् । मन्दिरं गृहम् । स्त्रियामपि । मन्दिरं मदिरापि स्यादिति विश्वः । चन्दिरौ चन्द्रहस्तिनौ । तिमिरं तमोऽक्षिरोगश्च । मिहिरः सूर्यः मुहिरः काम्यसभ्ययोः । मुचिरो दाता । रुचिरम् । रुधिरम् । बधिरः । शुष शोषणे । शुषिरं छिद्रम् । शुष्कमित्यन्ये ।

**उ52: अशेर्णित् (9.1.52)**

आशिरो वह्निरक्षसोः ।

**उ53: अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः (9.1.53)**

अजेर्वीभावाभावः । अजिरमङ्गणम् शशेरुपधाया इत्वम् । शिशिरं स्याद्दतोर्भेदे तुषारे शीतलेऽन्यवत् । श्रथ मोचने उपधाया इत्वं रेफलोपः । प्रत्ययरेफश्च लत्वम् । शिथिलम् । स्थास्फाय्योष्टिलोपः । स्थिरं निश्चलम् । स्फिरं प्रभूतम् । तिष्ठतेर्वुक् ह्रस्वत्वं च । स्थविरः । खदिरः । बाहुलकात् शीङो बुक् ह्रस्वत्वं च । शिबिरम् ।

**उ54: सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच् (9.1.54)**

सलति गच्छति निम्नमिति सलिलम् । कलिलः । अनिलः । महिला । पृषोदरादित्वान्महेलापि । भड इति सौत्रो धातुः । भडिलौ शूरसेवकौ । भण्डिलो दूतः कल्याणं च । शण्डिलो मुनिः । पिण्डिलो गणकः । तुण्डिलो मुखरः । कोकिलः । भविलो भव्यः । बाहुलकात्कुटिलः ।

**उ55: कमेः पश्च (9.1.55)**

कपिलः ।

**उ56: गुपादिभ्यः कित् (9.1.56)**

गुपिलो राजा । तिजिलो निशाकरः । गुहिलं वनम् ।

**उ57: मिथिलादयश्च (9.1.57)**

मथ्यन्तेऽत्र रिपवो मिथिला नगरी । पथिलः । पथिकः ।

**उ58: पतिकठिकुठिगडिगुडिदंशिभ्य एरक् (9.1.58)**

पतेरः पक्षी गन्ता च । छठेरः कृच्छ्रजीवी । कुठेरः पर्णाशः । बाहुलकान्नुम्न । गडेरो मेघः । गुडेरो गुडकः । दंशेरो हिंस्रः ।

**उ59: कुम्बेर्नलोपश्च (9.1.59)**

कुबेरः ।

**उ60: शदेस्त च (9.1.60)**

शतेरः शत्रुः ।

**उ61: मूलेरादयः (9.1.61)**

एरगन्ता निपात्यन्ते । मूलेरो जटा । गुधेरो गोप्ता । गुहेरो लोहघातकः । मुहेरो मूर्खः ।

**उ62: कबेरोतच् पश्च (9.1.62)**

कपोतः पक्षी ।

**उ63: भातेर्डवतुः (9.1.63)**

भातीति भवान् ।

**उ64: कठिचकिभ्यामोरन् (9.1.64)**

कठोरः । चकोरः ।

**उ65: किशोरादयश्च (9.1.65)**

किंपूर्वस्य श्रृणातेष्टिलोपः किमोऽन्त्यलोपः किशोरोऽश्वशावः । सहोरः साधुः ।

**उ66: कपिगडिगण्डिकटिपटिभ्य ओलच् (9.1.66)**

कपीति निर्देशान्नलोपः । कपोलः । गडोलगण्डोलौ गुडकपर्यायौ । कटोलः कटुः । पटोलः ।

**उ67: मीनातेरूरन् (9.1.67)**

मयूरः ।

### 368: स्यन्देः संप्रसारणं च (9.1.68)

सिन्दूरम् ।

### 369: सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् (9.1.69)

सिनोतीति सेतुः । तितुत्र-[3163] इति नेट् । तन्तुः । गन्तुः । मस्तु दधिमण्डम् । सच्यत इति सक्तुः । अर्धर्चादिः । ज्वरत्वर-[2654] इत्यूठ् । तत्र क्ङितीत्यनुवर्तते इति मते तु बाहुलकात् । ओतुर्बिडालः । धातुः क्रोष्टा ।

### 370: पः किच्च (9.1.70)

पिबतीति पितुर्वह्नौ दिवाकरे ।

### 371: अर्तेश्च तुः (9.1.71)

अर्तेस्तुः स्यात्स च कित् । ऋतुः स्त्रीपुष्पकालयोः ।

### 372: कमिमनिजनिगाभायाहिभ्यश्च (9.1.72)

एभ्यस्तुः स्यात् । कन्तुः कन्दर्पचित्तयोः । मन्तुरपराधः । जन्तुः प्राणी । गातुः पुंस्कोकिले भृङ्गे गन्धर्वे गायनेऽपि च । भानुरादित्यः । यातुरध्वगकालयोः । रक्षसि क्लीबे । हेतुः कारणम् ।

### 373: चायः किः (9.1.73)

केतुर्ग्रहपताकयोः ।

### 374: आप्नोतेर्ह्रस्वश्च (9.1.74)

अप्तुः शरीरम् ।

### 375: वसेस्तुन् (9.1.75)

वस्तु ।

### 376: अगारे णिच्च (9.1.76)

वेश्मभूर्वास्तुरस्त्रियाम् ।

### 377: कृञः क्तुः (9.1.77)

क्रतुर्यज्ञः ।

### 378: एधिवह्योश्च तुः (9.1.78)

एधतुः पुरुषः । वहतुरनड्वान् ।

### 379: जीवेरातुः (9.1.79)

जीवातुरस्त्रियां भक्ते जीविते जीवनौषधे ।

### 380: आतृकन् वृद्धिश्च (9.1.80)

जीवेरित्येव । जैवातृकस्त्विन्दुभिषगायुष्मत्सु कृषीवले ।

### उ81: कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः (9.1.81)

कर्षूः पुंसि करीषाग्नौ कर्षूर्नद्यां स्त्रियां मता । चमूः । तनूः । धनूः शस्त्रम् । सर्ज सर्जने । सर्जूर्वणिक् । खर्ज व्यथने । खर्जूः पामा ।

### उ82: मृजेर्गुणश्च (9.1.82)

मर्जूः शुद्धिकृत् ।

### उ83: वहो धश्च (9.1.83)

वधूर्जायास्नुषास्त्रीषु ।

### उ84: कषेश्छश्च (9.1.84)

कच्छूः पामा ।

### उ85: णित्कसिपद्यर्तेः (9.1.85)

कासूः शक्तिः । पादूश्चरणधारिणी । आरूः पिङ्गलः ।

### उ86: अणो डश्च (9.1.86)

आडूर्जलप्लवद्रव्यम् ।

### उ87: नञि लम्बेर्नलोपश्च (9.1.87)

तुम्ब्यलाबूरुभे समे इत्यमरः ।

### उ88: के श्र एरङ् चास्य (9.1.88)

कशब्दे उपपदे श्रृणातेरूः स्यादेरङ् आदेशः । कशेरूस्तृणकन्दे स्त्री । बाहुलकादुप्रत्यये कशेरुः क्लीबे पुंसि च ।

### उ89: त्रो दुट् च (9.1.89)

तरतेरूः स्यात्तस्य दुट् । तर्दूः स्याद्दारुहस्तकः ।

### उ90: दरिद्रातेर्यालोपश्च (9.1.90)

इश्च आश्च यौ तयोर्लोपः । दर्द्रूः कुष्ठप्रभेदः ।

### उ91: नृतिशृध्योः कूः (9.1.91)

नृतूर्नर्तकः । शृधूरपानम् ।

### उ92: ऋतेरम् च (9.1.92)

ऋतिः सौत्रो धातुः । ततः कूरमागमश्च । रन्तूर्देवनदी सत्यवाक् च ।

**उ93: अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः (9.1.93)**

एते कूप्रत्ययान्ता निपात्यन्ते । अन्दूर्बन्धनम् । दृभी ग्रन्थे । निपातनान्नुम् । दृम्भूः । अनुस्वाराभावोऽपि निपातनादित्येके । दृन्भूः । जमेर्बुक् । जम्बूः । जमु अदने इत्यस्येत्येके । बाहुलकाद्ध्रस्वोऽपि । जम्बुः । कफं लाति कफेलूः श्लेष्मातकः । निपातनादेत्वम् । कर्कं दधाति कर्कन्धूर्बदरी । निपातनान्नुम् । दिधिं धैर्यं स्यति त्यजतीति दिधिषूः पुनर्भूः । केचित्तु 'अन्दूदृम्भूजम्बूकम्बू' इति पठन्ति । दृम्फ उत्क्लेशे दृम्फूः सर्पजातिः । कमेर्बुक् । कम्बूः परद्रव्यापहारी ।

**उ94: मृग्रोरुतिः (9.1.94)**

मरुत् । गरुत्पक्षः ।

**उ95: ग्रो मुट् च (9.1.95)**

गिरतेरुतिस्तस्य च मुट् । गर्मुत्सुवर्णं तृणविशेषश्च ।

**उ96: हृषेरुलच् (9.1.96)**

हर्षुलो मृगकामिनोः । बाहुलकाच्चटतेः । चटुलं शोभनम् ।

**उ97: हृसृरुहियुषिभ्य इतिः (9.1.97)**

हरित्ककुभि वर्णे च तृणवाचिविशेषयोः । सरिन्नदी । रोहित् मृगविशेषस्य स्त्री । युष इति सौत्रो धातुः । ऋश्यस्य रोहित् । पुरुषस्य योषित् इति भाष्यम् ।

**उ98: ताडेर्णिलुक् च (9.1.98)**

ताडयतीति तडित् ।

**उ99: शमेर्डः (9.1.99)**

बाहुलकादिसंज्ञा एयादेश इट् च न । शण्ढः स्यात्पुंसि गोपतौ । शण्ढः क्लीबः ।

**उ100: कमेरठः (9.1.100)**

कमठः । कमठः कच्छपे पुंसि भाण्डभेदे नपुंसकमिति मेदिनी । बाहुलकाज्जरठः ।

**उ101: रमेर्वृद्धिश्च (9.1.101)**

रामठं हिङ्गु ।

**उ102: शमेः खः (9.1.102)**

शङ्खः ।

**उ103: कणेष्ठः (9.1.103)**

कण्ठः ।

**उ104: कलस्तृपश्च (9.1.104)**

तृपतेः कलप्रत्ययः चात्तृफतेः । तृपला लता । त्रिफला तु फलत्रिके ।

**उ105: शपेर्बश्च (9.1.105)**

शबलः ।

**उ106: वृषादिभ्यश्चित् (9.1.106)**

वृषलः । पललम् । बाहुलकाद्गुणः । सरलः । तरलः । (ग) कमेर्बुक् च ॥ कम्बलः । मुस खण्डने मुसलम् । (ग) लङ्गेर्वृद्धिश्च ॥ लाङ्गलम् । (ग) कुटिकशिकौतिभ्यः प्रत्ययस्य मुट् च ॥ कुड्मलः । कुडेरपि । कुड्मलः । कश्मलम् । बाहुलकाद्गुणः । कोमलम् ।

**उ107: मृजेष्टिलोपश्च (9.1.107)**

मलम् ।

**उ108: चुपेरच्चोपधायाः (9.1.108)**

चपलम् ।

**उ109: शकिशम्योर्नित् (9.1.109)**

शकलम् । शमलम् ।

**उ110: छो गुक् ह्रस्वश्च (9.1.110)**

छगलः । प्रज्ञादित्वाच्छागलः ।

**उ111: ञमन्ताड्डः (9.1.111)**

दण्डः । रण्डा । खण्डः । भण्डः । वण्डश्छिन्नहस्तः । अण्डः । बाहुलकात्सभावः । षण्डः सङ्घातः । तालव्यादिरित्यपरे । शण्डः । गण्डः । चण्डः । पण्डः क्लीबः । पण्डा बुद्धिः ।

**उ112: क्वादिभ्यः कित् (9.1.112)**

कवर्गादिभ्यो डः कित्स्यात् । कुण्डम् । काण्डम् । गुड् । गुडः । घुण भ्रमणे । घुण्डो भ्रमरः ।

**उ113: स्थाचतिमृजेरालज्वालजालीयचः (9.1.113)**

तिष्ठतेरालच् । स्थालम् स्थाली । चतेर्वालच् । चत्वालः । मृजेरालीयच् । मार्जालीयो बिडालः ।

**उ114: पतिचण्डिभ्यामालञ् (9.1.114)**

पातालम् । चण्डालः । प्रज्ञादित्वादणि चाण्डालोऽपीत्येके ।

**उ115: तमिविशिबिडिमृणिकुलिकपिपलिपञ्चिभ्यः कालन् (9.1.115)**

तमालः । विशालः । बिडालः । मृणालम् । कुलालः । कपालम् । पलालम् । पञ्चालाः ।

**३116: पतेरङ्गच् पक्षिणि (9.1.116)**

पतङ्गः ।

**३117: तरत्यादिभ्यश्च (9.1.117)**

तरङ्गः । लवङ्गम् ।

**३118: विडादिभ्यः कित् (9.1.118)**

विडङ्गः । मृदङ्गः । कुरङ्गः । बाहुलकादुत्वं च ।

**३119: सृवृञोर्वृद्धिश्च (9.1.119)**

सारङ्गः । वारङ्गः खड्गादिमुष्टिः ।

**३120: गन् गम्यद्योः (9.1.120)**

गङ्गा । अद्गः पुरोडाशः ।

**३121: छापूखडिभ्यः कित् (9.1.121)**

छागः । पूगः । खङ्गः । बाहुलकात् षिट अनादरे गन्सत्वाभावश्च । षिङ्गः तरलः । षिङ्गैरगद्यत ससंभ्रममेवमेकेति माघः ।

**३122: भृञः किन्नुट् च (9.1.122)**

भृञः गन् कित्स्यात्तस्य नुत् च । भृङ्गाः षिङ्गालिधूम्याटाः ।

**३123: शृणातेर्ह्रस्वश्च (9.1.123)**

शृङ्गम् ।

**३124: गण् शकुनौ (9.1.124)**

नुट् चेत्यनुवर्तते । शार्ङ्गः ।

**३125: मुदिग्रोर्गग्गौ (9.1.125)**

मुद्गः । गर्गः ।

**३126: अण्डन्कृसृभृवृञः (9.1.126)**

करण्डः । सरण्डः पक्षी । भरण्डः स्वामी । वरण्डो मुखरोगः ।

**३127: शृदृभसोऽदिः (9.1.127)**

शरत् । दरद्धृदयकूलयोः । भसज्ञघनम् ।

**३128: दृणातेर्दृग् ह्रस्वश्च (9.1.128)**

दृषत् ।

**उ129: त्यजितनियजिभ्यो डित् (9.1.129)**

त्यद् । तद् । यद् । सर्वादयः ।

**उ130: एतेस्तुट् च (9.1.130)**

एतद् ।

**उ131: सर्तेरटिः (9.1.131)**

सरट् स्याद्वातमेघयोः । वेदभाष्ये तु याभिः कृशानुमिति मन्त्रे सरड्भ्यो मधुमक्षिकाभ्य इति व्याख्यातम् ।

**उ132: लङ्घेर्नलोपश्च (9.1.132)**

लघट् वायुः ।

**उ133: पारयतेरजिः (9.1.133)**

पारक् सुवर्णम् ।

**उ134: प्रथः कित्संप्रसारणं च (9.1.134)**

पृथक् । स्वरादिपाठादव्ययत्वम् ।

**उ135: भियः षुक् ह्रस्वश्च (9.1.135)**

भिषक् ।

**उ136: युष्यसिभ्यां मदिक् (9.1.136)**

युष् सौत्रो धातुः । युष्मद् । अस्मद् । त्वम् । अहम् ।

**उ137: अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन् (9.1.137)**

एभ्यश्चतुर्दशभ्यो मन् । अर्मश्चक्षूरोगः । स्तोमः सङ्घातः । सोमः । होमः । सर्मो गमनम् । धर्मः क्षेमं कुशलम् । क्षोमम् । प्रज्ञाद्यणि क्षौमं च । भाम आदित्यः । यामः । वामः शोभनदुष्टयोः । पद्मम् । यक्ष पूजायाम् । यक्ष्मो रोगराजः । नेमः ।

**उ138: जहातेः सन्वदालोपश्च (9.1.138)**

जिह्मः कुटिलमन्दयोः ।

**उ139: अवतेष्टिलोपश्च (9.1.139)**

मन्प्रत्ययस्यायं टिलोपो न प्रकृतेः । अन्यथा डिदित्येव ब्रूयात् । ज्वरत्वर- 2654 इति ऊठौ । तयोर्दीर्घे कृते गुणः । चादिपाठादव्ययत्वमित्युज्ज्वलदत्तस्तन्न । तेषामसत्त्वार्थत्वात् । वस्तुतस्तु स्वरादिपाठादव्ययत्वम् । अवतीति ओम् ।

### उ140: ग्रसेरा च (9.1.140)

ग्रामः ।

### उ141: अविसिविसिशुषिभ्यः कित् (9.1.141)

ऊमं नगरम् । स्यूमो रश्मिः । सिमः सर्वः । शुष्ममग्निसमीपयोः ।

### उ142: इषियुधीन्धिदसिश्याधूसूभ्यो मक् (9.1.142)

इष्मः कामवसन्तयोः । ईषीति पाठे दीर्घादिः । युध्मः शरो योद्धा च । इध्मः समित् । दस्मो यजमानः । श्यामः धूमः । सूमोऽन्तरिक्षम् । बाहुलकादीर्मं व्रणः ।

### उ143: युजिरुचितिजां कुश्च (9.1.143)

युग्मम् । रुक्मम् । तिग्मम् ।

### उ144: हन्तेर्हि च (9.1.144)

हिमम् ।

### उ145: भियः षुग्वा (9.1.145)

भीमः । भीष्मः ।

### उ146: घर्मः (9.1.146)

घृधातोर्मग्गुणश्च निपात्यते ।

### उ147: ग्रीष्मः (9.1.147)

ग्रसतेर्निपातोऽयम् ।

### उ148: प्रथेः षिवन् संप्रसारणं च (9.1.148)

पृथिवी । पवन्नित्येके । पृथवी पृथिवी पृथ्वी इति शब्दार्णवः ।

### उ149: अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन् (9.1.149)

अश्वः । प्रुष स्नेहनादौ । प्रुष्वः स्यादृतुसूर्ययोः । प्रुष्वा जलकणिका । लट्वा पक्षिभेदः फलं च । कण्वं पापम् । बाहुलकादित्वे किण्वमपि । खट्वा । विश्वम् ।

### उ150: इण्शीभ्यां वण् (9.1.150)

एवो गन्ता । ये च एवा मरुतः । असत्वे निपातोऽयम् । शेवं मित्राय वरुणाय ।

### उ151: सर्वनीघृष्वरिष्वलष्वशिवपद्वप्रह्वेष्वा अस्वतन्त्रे (9.1.151)

अकर्तर्येते निपात्यन्ते । सृतमनेन विश्वमिति सर्वम् । निपूर्वाद्घृषेर्गुणाभावोऽपि । निघृष्यतेऽनेन निघृष्वः खुरः । रिष्वो हिंस्रः । लष्वो नर्तकः । लिष्व इत्यन्ये । तत्रोपधाया इत्वमपि । शेतेऽस्मिन् सर्वमिति शिवः शम्भुः । शीङो ह्रस्वत्वम् । पद्वो रथो भूलोकश्च । प्रहूयते इति प्रह्वः ।

ह्वेञ आकारवकारलोपः । जहातेरालोपो वा । ईषेर्वन् । ईष्व आचार्यः । इष्व इत्यन्ये । अस्वतन्त्रे किम् । सर्ता सारकः । बाहुलकाद् ह्वसतेः ह्रस्वः ।

### उ152: शेवयह्वजिह्वाग्रीवाप्वामीवाः (9.1.152)

शेव इत्यन्तोदात्तार्थम् । यान्त्यनेन वह्वः । ह्रस्वो हुगागमश्च । लिहन्त्यनया जिह्वा । लकारस्य जः गुणाभावश्च । गिरन्त्यनया ग्रीवा । ईडागमश्च । अप्नोतीत्याप्वा वायुः । मीवा उदरकृमिः । वायुरित्यन्ये ।

### उ153: कृगृशृदृभ्यो वः (9.1.153)

कर्वः काम आखुश्च । गर्वः । शर्वः । दर्वो राक्षसः ।

### उ154: कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः (9.1.154)

यौतीति युवा । वृषा इन्द्रः । तक्षा । राजा । धन्वा मरुः । धन्व शरासनम् । द्युवा सूर्यः । प्रतिदीव्यन्त्यस्मिन् प्रतिदिवा दिवसः ।

### उ155: सप्यशूभ्यां तुट् च (9.1.155)

सप्त । अष्ट ।

### उ156: नञि जहातेः (9.1.156)

अहः ।

### उ157: श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्निति (9.1.157)

एते त्रयोदश कनिप्रत्ययान्ता निपात्यन्ते । श्वयतीति श्वा । उक्षा पूषा । प्लिह गतौ । इकारस्य दीर्घत्वम् । प्लेहतीति प्लीहा कुक्षिव्याधिः । क्लिदू आर्द्रीभावे । क्लिद्यति क्लेदा चन्द्रः । स्निह्यतेर्गुणः । स्निह्यतीति स्नेहा सुहृच्चन्द्रश्च । मुह्यन्त्यस्मिन्नाहते । मूर्धा । मुहेरुपधाया दीर्घो धोऽन्तादेशो रमागमश्च । मज्जत्यस्थिषु मज्जा अस्थिसारः । अर्यपूर्वो माङ् अर्यमा । विश्वं प्साति विश्वप्साग्निः । परिजायते परिज्मा चन्द्रोऽग्निश्च । जनेरुपधालोपो मश्चान्तादेशः । मातरि अन्तरिक्षे श्वयतीति मातरिश्वा । धातोरिकारलोपः । मह पूजायाम् । हस्य घो वुगागमश्च मघवा इन्द्रः ।

### उ158: कृहृभ्यामेणुः (9.2.1)

करेणुः । हरेणुर्गन्धद्रव्यम् ।

### उ159: हनिकुषिनरिकाशिभ्यः कथन् (9.2.2)

हथो विषण्णः । कुष्ठः । नीथो नेता । रथः काष्ठम् ।

### उ160: अवे भृञः (9.2.3)

अवभृथः ।

**उ161: उषिकुषिगार्तिभ्यः स्थन् (9.2.4)**

ओष्ठः कोष्ठम् । गाथा अर्थः । बाहुलकात् शोथः ।

**उ162: सर्तेर्णित् (9.2.5)**

सार्थः समूहः ।

**उ163: जॄवृञ्भ्यामूथन् (9.2.6)**

जरूथं मांसम् । वरूथो रथगुप्तौ ना ।

**उ164: पातॄतुदिवचिरिचिसिचिभ्यस्तक् (9.2.7)**

पीथो रविर्घृतं पीथम् । तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु । अवतारर्षिजुष्टाम्भःस्त्रीरजःसु च विश्रुतमिति विश्वः । तुत्थोऽग्निः । उक्थं सामभेदः । रिक्थम् । बाहुलकाद्दृचेरपि । रिक्थमृक्थं धनं वसु । सिक्थम् ।

**उ165: अर्तेर्निरि (9.2.8)**

निर्ऋथं साम ।

**उ166: निशीथगोपीथावगथाः (9.2.9)**

निशीथोऽर्धरात्रः रात्रिमात्रं च । गोपीथं तीर्थम् । अवगथः प्रातःस्नातः ।

**उ167: गश्चोदि (9.2.10)**

उद्गीथः साम्नो भागविशेषः ।

**उ168: समीणः (9.2.11)**

समिथो वह्निः संग्रामश्च ।

**उ169: तिथपृष्ठगूथयूथप्रोथाः (9.2.12)**

तिजेर्जलोपः । तिथोऽनलः कामश्च । पृष्ठम् । गूथं विष्ठा । यूथं समूहः । प्रोथमस्त्री तुरङ्गास्ये प्रोथः प्रस्थित उच्यते ।

**उ170: स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् (9.2.13)**

द्वात्रिंशद्भ्यो रक् स्यात् । वलि यलोपः । स्फारम् । न्यङ्क्वादित्वात्कुत्वम् । तक्रम् । वक्रम् । शक्रः । क्षिप्रम् । क्षुद्रः । सृप्रश्चन्द्रः । तृप्रः पुरोडाशः । दृप्रो बलवान् । वन्द्रः पूजकः । उन्दी, उन्द्रो जलचरः । श्वित्रं कुष्ठम् । वृत्रो रिपौ ध्वनौ ध्वान्ते शैले चक्रे च दानवे । अजेर्वी, वीरः । नीरम् । पद्रो ग्रामः । मन्द्रो हर्षो देशभेदश्च । मुद्रा प्रत्ययकारिणी । खिद्रो रोगो दरिद्रश्च ।

छिद्रम् । भिद्रं वज्रम् । मन्द्रः । चन्द्रः । पचाद्यचि चन्दोऽपि । हिमांशुश्चन्द्रमाश्चन्द्रः शशी चन्दो हिमद्युतिः । दहोऽग्निः । दस्रः स्ववैंद्यः । दम्भ्रः समुद्रः स्वल्पं च । वसेः संप्रसारणे ।

### 3168: न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम् (8.3.110)

रेफपरस्य सकारस्य सृप्यादीनां च मूर्धन्यो न स्यात् । पूर्वपदात् [3643] इति प्राप्तः प्रतिषिध्यत इति वृत्तिर्भूयोऽभिप्राया । तेन शासिवसि- [2410] इति प्राप्तमपि न । उस्रो रश्मिः । उस्रा गौः । वाश्रो दिवसः । अवश्रं मन्दिरम् । शीरोऽजगरः । हस्रो मूर्खः । सिध्रः साधुः । शुभ्रम् । बाहुलकात् मुसे रक् । मुस्रम् उदश्रु ॥

### 3171: चकिरम्योरुच्चोपधायाः (9.2.14)

चुक्रमम्लद्रव्यम् । रुम्रोऽरुणः ।

### 3172: वौ कसेः (9.2.15)

विकुस्रश्चन्द्रः ।

### 3173: अमितम्योर्दीर्घश्च (9.2.16)

आम्रम् । ताम्रम् ।

### 3174: निन्देर्नलोपश्च (9.2.17)

निद्रा ।

### 3175: अर्देर्दीर्घश्च (9.2.18)

आर्द्रम् ।

### 3176: शुचेर्दश्च (9.2.19)

शूद्रः ।

### 3177: दुरीणो लोपश्च (9.2.20)

दुःखेनेयते प्राप्यत इति दूरम् ।

### 3178: कृतेश्छः क्रू च (9.2.21)

कृच्छ्रम् । क्रूरः ।

### 3179: रोदेर्णिलुक् च (9.2.22)

रोदयतीति रुद्रः ।

### 3180: बहुलमन्यत्रापि संज्ञाछन्दसोः (9.2.23)

णिलुगित्येव । वान्ति पर्णशुषो वातास्ततः पर्णमुचोऽपरे ।

### 3181: जोरी च (9.2.24)

जीरोऽणुः । ज्यश्चेत्येके ।

**उ182: सुसूधागृधिभ्यः क्रन् (9.2.25)**

सुरः । सूरः । धीरः । गृध्रः ।

**उ183: शुसिचिमीनां दीर्घश्च (9.2.26)**

शुः सौत्रः । शूरः । सीरम् । चीरम् । भीरः समुद्रः ।

**उ184: वा विन्धेः (9.2.27)**

वीध्रं विमलम् ।

**उ185: वृधिवपिभ्यां रन् (9.2.28)**

वर्ध्रं चर्म । वप्रः प्राकारः ।

**उ186: ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः (9.2.29)**

रन्नन्ता ऊनविंशतिः । निपातनाद्गुणाभावः । ऋज्रो नायकः । इदि इन्द्रः । अङ्गेर्नलोपः । अग्रम् । वज्रोऽस्त्री हीरके पवौ । डुवप् उपधाया इत्वम् विप्रः । कुम्बिचुम्ब्योर्नलोपः । कुब्रमरण्यम् । चुब्रं मुखम् । क्षुर विलेखने रेफलोपः । अगुणः । क्षुरः । खुर छेदने रलोपो गुणाभावश्च । खुरः । भन्देर्नलोपः भद्रम् । उच समवाये । चस्य गः । उग्रः । ञिभी । भेरी । पक्षे लः । भेलो जलतरणद्रव्यम् । शुचेश्चस्य कः । शुक्रः । पक्षे लः । शुक्लः । गुङ् वृद्धिः । गौरोऽरुणे सिते पीते । वन संभक्तौ । वम्रो विभागी इणो गुणाभावः । इरा मद्ये च वारिणि । मा माने माला ।

**उ187: समि कस उकन् (9.2.30)**

कस गतौ । सम्यक्कसन्ति पलायन्ते जना अस्मादिति सङ्कसुको दुर्जनः अस्थिरश्च ।

**उ188: पचिनशोर्णुकन् कनुमौ च (9.2.31)**

पचेः कः । पाकुकः सूपकारः । नशेर्नुम् । नंशुकः ।

**उ189: भियः क्रुकन् (9.2.32)**

भीरुकः ।

**उ190: क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि (9.2.33)**

रजकः । इक्षुकुट्टकः । चरकः । चष भक्षणे । चषकः । शुनकः । भषकः ।

**उ191: रमे रश्च लो वा (9.2.34)**

रमको विलासी । लमकः ।

**उ192: जहातेर्द्वे च (9.2.35)**

जहकस्त्यागी कालश्च ।

**उ193: ध्मो धम च (9.2.36)**

धमकः कर्मकारः ।

**उ194: हनो वध च (9.2.37)**

वधकः ।

**उ195: बहुलमन्यत्रापि (9.2.38)**

कुह विस्मापने । कुहकः । कृतकम् ।

**उ196: कृषेर्वृद्धिश्चोदीचाम् (9.2.39)**

कार्षकः । कृषकः ।

**उ197: उदकं च (9.2.40)**

प्रपश्चार्थम् ।

**उ198: वृश्चिकृष्योः किकन् (9.2.41)**

वृश्चिकः । कृषिकः ।

**उ199: प्राङ्पिणिकषः (9.2.42)**

प्रापणिकः पण्यविक्रयी । प्राकषिकः परदारोपजीवी ।

**उ200: मुषेर्दीर्घश्च (9.2.43)**

मूषिक आखुः ।

**उ201: स्यमेः संप्रसारणं च (9.2.44)**

चाद्दीर्घः । सीमिको वृक्षभेदः ।

**उ202: क्रिय इकन् (9.2.45)**

क्रयिकः क्रेता ।

**उ203: आङि पणिपनिपतिखनिभ्यः (9.2.46)**

आपणिकः । आपनिकः इन्द्रनीलः किरातश्च । आपतिकः श्येनो दैवायत्तश्च । आखनिको मूषिको वराहश्च ।

**उ204: श्यास्त्याहृञविभ्य इनच् (9.2.47)**

श्येनः । स्त्येनः । हरिणः । अविनोऽध्वर्युः ।

**उ205: वृजेः किच्च (9.2.48)**

वृजिनम् ।

**3206: अजेरज च (9.2.49)**

वीभावबाधनार्थम् । अजिनम् ।

**3207: बहुलमन्यत्रापि (9.2.50)**

कठिनम् । नलिनम् । मलिनम् । कुण्डिनम् । द्यतेः यत्परुषि दिनम् । दिवसोऽपि दिनम् ।

**3208: द्रुदक्षिभ्यामिनन् (9.2.51)**

द्रविणम् । दक्षिणः । दक्षिणा ।

**3209: अर्तेः किदिच्च (9.2.52)**

इरिणं शून्यम् ।

**3210: वेपितुह्योर्ह्रस्वश्च (9.2.53)**

विपिनम् । तुहिनम् ।

**3211: तलिपुलिभ्यां च (9.2.54)**

तलिनं विरले स्तोके स्वच्छेऽपि तलिनं त्रिषु । पुलिनम् ।

**3212: गर्वेरत उच्च (9.2.55)**

गौरादित्वात् ङीष् । गुर्विणी । गर्भिणी ।

**3213: रुहेश्च (9.2.56)**

रोहिणः ।

**3214: महेरिनण् च (9.2.57)**

चादिनन् । माहिनन् । महिनं राज्यम् ।

**3215: क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसंप्रसारणं च (9.2.58)**

वाक् । प्राट् । श्रीः । स्रवत्यतो घृतादिकमिति स्रूर्यज्ञोपकरणम् । द्रूर्हिरण्यम् । कटप्रूः कामरूपी कीटश्च । जूराकाशे सरस्वत्यां पिशाच्यां जवने स्त्रियाम् ।

**3216: आप्नोतेर्ह्रस्वश्च (9.2.59)**

आपः । अपः । अद्भिः । अद्भ्यः ।

**3217: परौ व्रजेः षश्च पदान्ते (9.2.60)**

व्रजेः क्विब्दीर्घौ स्तः पदान्ते तु षश्च । परिव्राट् । परिव्राजौ ।

**3218: हुवः श्लुवच्च (9.2.61)**

जुहूः ।

**3219: स्रुवः कः (9.2.62)**

स्रुवः ।

**3220: चिक् च (9.2.63)**

इकार उच्चारणार्थः । क इत् कुत्वम् । स्रुवं च स्रुचश्च संमृड्ढि ।

**3221: तनोतेरनश्च वः (9.2.64)**

तनोतेश्चिक् प्रत्ययः । अनो वशब्दादेशश्च । त्वक् ।

**3222: ग्लानुदिभ्यां डौः (9.2.65)**

ग्लौः । नौः ।

**3223: च्विरव्ययम् (9.2.66)**

डौरित्येव । ग्लौकरोति । कृन्मेजन्तः [449] इति सिद्धे नियमार्थमिदम् । उणादिप्रत्ययान्तश्च्व्यन्त एवेति ।

**3224: रातेर्डैः (9.2.67)**

राः । रायौ । रायः ।

**3225: गमेर्डोः (9.2.68)**

गौर्नादित्ये बलीवर्दे किरणक्रतुभेदयोः । स्त्री तु स्यादि्दशि भारत्यां भूमौ च सुरभावपि । नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु । बाहुलकाद् द्युतेरपि डोः । द्यौः स्त्री स्वर्गान्तरिक्षयोः ।

**3226: भ्रमेश्च डूः (9.2.69)**

भ्रूः । चाद्द्रमेः । अग्रेगूः ।

**3227: दमेर्डोसिः (9.2.70)**

दोः । दोषौ ।

**3228: पणेरिज्यादेश्च वः (9.2.71)**

वणिक् । स्वार्थेऽण् । नैगमो वाणिजो वणिक् ।

**3229: वशेः कित् (9.2.72)**

उशिगग्नौ घृतेपि च ।

**3230: भृञ ऊच्च (9.2.73)**

भूरिक् भूमिः ।

**उ231: जसिसहोरुरिन् (9.2.74)**

जसुरिर्वज्रम् । सहुरिरादित्यः पृथिवी च ।

**उ232: सुयुरुवृञो युच् (9.2.75)**

सवश्चन्द्रमाः । यवनः । रवणः । कोकिलः । वरणः ।

**उ233: अशेरश च (9.2.76)**

अश्नोतेर्युच् स्यात् रशादेशश्च । रशना काञ्ची । जिह्वावाची तु दन्त्यसकारवान् ।

**उ234: उन्देर्नलोपश्च (9.2.77)**

ओदनः ।

**उ235: गमेर्गश्च (9.2.78)**

गमेर्युच् स्याद्गश्चादेशः । गगनम् ।

**उ236: बहुलमन्यत्रापि (9.2.79)**

युच् स्यात् । स्यन्दनः । रोचना ।

**उ237: रञ्जेः क्युन् (9.2.80)**

रजनम् ।

**उ238: भूसूधूभ्रस्जिभ्यश्छन्दसि (9.2.81)**

भुवनम् । सुवन आदित्यः । धवनो वह्निः । निधुवनं सुरतम् । भृज्जनमम्बरीषम् ।

**उ239: कृपृवृजिमन्दिनिधाञः क्युः (9.2.82)**

किरणः । पुरणः समुद्रः । वृजनमन्तरिक्षम् । मन्दनं स्तोत्रम् । निधनम् ।

**उ240: धृषेर्धिष् च संज्ञायाम् (9.2.83)**

धिषणो गुरुः । धिषणा धीः ।

**उ241: वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च (9.2.84)**

अतिप्रत्ययान्ताः । पृषु सेचने गुणाभावः पृषन्ति । बृहत् महान् । गमेर्जगादेशः । जगत् ।

**उ242: संश्चत्तृपद्वेहत् (9.2.85)**

एते निपात्यन्ते । पृथक्करणं शतृवद्भावनिवृत्त्यर्थम् । संचिनोतेः सुट् इकारलोपः । संश्चत् कुहकः । तृपत् छत्रम् । विपूर्वाद्धन्तेष्टिलोपः । इत ए च । वेहद्गर्भोपघातिनी ।

**उ243: छन्दस्यसानच् शुजृभ्याम् (9.2.86)**

शवसानः पन्थाः । जरसानः पुरुषः ।

**3244: ऋञ्जिवृद्धिमन्दिसहिभ्यः कित् (9.2.87)**

ऋञ्जसानो मेघः । वृधसानः पुरुषः । मन्दसानोऽग्निर्जीवश्च । सहसानो यज्ञो मयूरश्च ।

**3245: अर्तेर्गुणः शुट् च (9.2.88)**

अर्शसानोऽग्निः ।

**3246: सम्यानच्स्तुवः (9.2.89)**

संस्तवानो वाग्मी ।

**3247: युधिबुधिदृशिभ्यः किच्च (9.2.90)**

युधानः । बुधानः । दृशानो लोकपालकः ।

**3248: हुर्छेः सनो लुक् छलोपश्च (9.2.91)**

जुहुराणश्चन्द्रमाः ।

**3249: श्वितेर्दश्च (9.2.92)**

शिश्विदानः पुण्यकर्मा ।

**3250: तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ (9.2.93)**

शंसेः क्षदादिभ्यश्च क्रमात्तृन्तृचौ स्तः तौ चानिटौ । शंस्ता स्तोता । शंस्तरौ । शंस्तरः । क्षदिः सौत्रो धातुः शकलीकरणे भक्षणे च । अनुदात्तेत् । वृक्ये चक्षदानमिति मन्त्रात् । उक्षाणं वा वेहतं वा क्षदन्ते इति ब्राह्मणाच्च । क्षत्ता स्यात्सारथौ द्वाःस्थे क्षत्रियायां च शूद्रजे ।

**3251: बहुलमन्यत्रापि (9.2.94)**

मन् । मन्ता । हन् । हन्ता । इत्यादि ।

**3252: नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ (9.2.95)**

न पतन्त्यनेन नप्ता पौत्रो दौहित्रश्च । नयतेः पुग्गुणश्च । नेष्टा । त्विषेरितोऽत्वम् । त्वष्टा । होता । पोता ऋत्विग्भेदः । भ्राजतेर्जलोपः । भ्राता । जायां माति जामाता । मान पूजायां नलोपः । माता । पातेराकारस्य इत्वम् । पिता । दुहेस्तृच इट् गुणाभावश्च । दुहिता ।

**3253: सुञ्यसेर्ऋन् (9.2.96)**

स्वसा ।

**3254: यतेर्वृद्धिश्च (9.2.97)**

याता । भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम् ।

**3255: नञि च नन्देः (9.2.98)**

न नन्दति ननान्दा । इह वृद्धिर्नानुवर्तत इत्येके ननान्दा तु स्वसा पत्युर्ननन्दा नन्दिनी च सेति शब्दार्णवः ।

### ३256: दिवेर्ऋः (9.2.99)

देवा देवरः । स्वामिनो देवृ देवरौ ।

### ३257: नयतेर्डिच्च (9.2.100)

ना । नरौ नरः ।

### ३258: सव्ये स्थश्छन्दसि (9.2.101)

अम्बाम्ब- [2918] इत्यत्र 'स्थास्थिन्स्थूणामुपसंख्यानम्' । सव्येष्टा सारथिः । सव्येष्टरौ । सव्येष्टरः ।

### ३259: अर्तिसृधृधम्यश्यवितृभ्योऽनिः (9.2.102)

सरणिः । धरणिः । धमनिः । अमनिर्गतिः । अशनिः । अवनिः । तरणिः । बाहुलकात् रजनिः ।

### ३260: आङि शुषेः सनश्छन्दसि (9.2.103)

आशुशुक्षणिरग्निर्वातश्च ।

### ३261: कृषेरादेश्च चः (9.2.104)

चर्षणिर्जनः ।

### ३262: अदेर्मुट् च (9.2.105)

अद्मनिरग्निः ।

### ३263: वृतेश्च (9.2.106)

वर्तनिः । गोवर्धनस्तु चकारान्मुट् वर्त्मनिरित्याह ।

### ३264: क्षिपेः किच्च (9.2.107)

क्षिपणिरायुधम् ।

### ३265: अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः (9.2.108)

अर्चिर्ज्वाला । इदन्तोऽप्ययम् । अग्नेर्भ्राजन्ते अर्चयः । शोचिर्दीप्तिः । हविः सर्पिः । इस्मन्- [2915] इति ह्रस्वः । छदिः पटलम् । छर्दिर्वमनव्याधिः । इदन्तोऽपि । छर्द्यतीसारशूलवान् ।

### ३266: बृंहेर्नलोपश्च (9.2.109)

बर्हिर्ना कुशशुष्मणोः ।

### ३267: द्युतेरिसिन्नादेश्च जः (9.2.110)

ज्योतिः ।

**उ268: वसौ रुचेः संज्ञायाम् (9.2.111)**

वसुरोचिर्यज्ञः ।

**उ269: भुवः कित् (9.2.112)**

भुविः समुद्रः ।

**उ270: सहो धश्च (9.2.113)**

सिधिरनड्वान् ।

**उ271: पिबतेस्थुक् (9.2.114)**

पाथिश्चक्षुःसमुद्रयोः ।

**उ272: जनेरुसिः (9.2.115)**

जनुर्जननम् ।

**उ273: मनेर्धश्छन्दसि (9.2.116)**

मधुः ।

**उ274: अर्तिपृवपियजितनिधनितपिभ्यो नित् (9.2.117)**

अरुः । परुर्ग्रन्थिः । वपुः । यजुः । तनुः । तनुषी । तनूंषि । धनुरस्त्रियाम् । धनुर्वंशविशुद्धोऽपि निर्गुणः किं करिष्यति । सान्तस्य उदन्तस्य वा रूपम् । तपुः सूर्याग्निशत्रुषु ।

**उ275: एतेर्णिच्च (9.2.118)**

आयुः । आयुषी ।

**उ276: चक्षेः शिच्च (9.2.119)**

चक्षुः ।

**उ277: मुहेः किच्च (9.2.120)**

मुहुरव्ययम् ।

**उ278: बहुलमन्यत्रापि (9.2.121)**

आचक्षुः । परिचक्षुः ।

**उ279: कृगृशृवृञ्चतिभ्यः ष्वरच् (9.2.122)**

कर्वरो व्याघ्ररक्षसोः । गर्वरोऽहंकारी । शर्वरी रात्रिः । वर्वरः प्राकृतो जनः । चत्वरम् ।

**उ280: नौ सदेः (9.2.123)**

निपद्वरस्तु जम्बालः । निपद्वरी रात्रिः ।

**3281: छित्वरछत्वरधीवरपीवरमीवरचीवरतीवरनीवरगह्वरकट्वरसंयद्वराः (9.3.1)**

एकादश ष्वरच्प्रत्ययान्ता निपात्यन्ते । छिदिर् छद् अनयोस्तकारोऽन्तादेशः छिदेर्गुणाभावश्च । छित्वरो धूर्तः । छत्वरो गृहकुञ्जयोः । धीवरः कैवर्तः । पीवरः स्थूलः । मीवरो हिंसकाः । चिनोतेर्दीर्घश्च । चीवरं भिक्षुकप्रावरणं । तीवरो जातिविशेषः । नीवरः परिव्राट् । गाहतेर्ह्रस्वत्वम् । गह्वरम् । कटे वर्षादौ । कट्वरं व्यजनम् । यमेर्दकारः । संयद्वरो नृपः । पदेः संपद्वरः इत्येके ।

**3282: इण्सिञ्जिदीङुष्यविभ्यो नक् (9.3.2)**

इनः सूर्ये नृपे पत्यौ । सिनः काणः । जिनोऽर्हन् । दीनः । उष्णः । ऊनः ।

**3283: फेनमीनौ (9.3.3)**

एतौ निपात्येते । स्फायतेः फेनः । मीनः ।

**3284: कृषेर्वर्णे (9.3.4)**

कृष्णः ।

**3285: बन्धेर्ब्रधिबुधी च (9.3.5)**

ब्रध्नः । बुध्नः ।

**3286: धापॄवस्यज्यतिभ्यो नः (9.3.6)**

धाना भ्रष्टयवे स्त्रियः । पर्णं पत्रम् । पर्णः किंशुकः । वस्नो मूल्ये वेतने च । अजेर्वी । वेनः । अत्न आदित्यः । बाहुलकात् । श्रृणोतेः श्रोणः पङ्गुः ।

**3287: लक्षेरट् च (9.3.7)**

लक्षेश्चुरादिण्यन्तान्नः स्यात्तस्याडागमश्च । चान्मुडित्येके । लक्षणं लक्ष्मणं नाम्नि चिन्हे च । लक्षणो लक्ष्मणश्च रामभ्राता । लक्षणा हंसयोषायां सारसस्य च लक्ष्मणा ।

**3288: वनेरिच्चोपधायाः (9.3.8)**

वेन्ना नदी ।

**3289: सिवेष्टेर्यू च (9.3.9)**

दीर्घोच्चारणसामर्थ्यान्न गुणः । स्यून आदित्यः । बाहुलकात् केवलो नः । ऊठ् । अन्तरङ्गत्वाद्यण् । गुणः । स्योनः ।

**3290: कृवृजॄसिद्रुपन्यनिस्वपिभ्यो नित् (9.3.10)**

कर्णः । वर्णः । जर्णश्चन्द्रे च वृक्षे च । सेना । द्रोणः । पन्नो नीचैर्गतिः । अन्नमोदनः । स्वप्नो निद्रा ।

**उ291: धेट इच्च (9.3.11)**

धेनः सिन्धुर्नदी धेना ।

**उ292: तृषिशुषिरसिभ्यः कित् (9.3.12)**

तृष्णा । शुष्णः सूर्यो वह्निश्च । रस्नं द्रव्यम् ।

**उ293: सुञो दीर्घश्च (9.3.13)**

सूना वधस्थानम् ।

**उ294: रमेस्त च (9.3.14)**

रमयतीति रत्नम् ।

**उ295: रास्नासास्नास्थूणावीणाः (9.3.15)**

रास्ना गन्धद्रव्यम् । सास्ना गोगलकम्बलः । स्थूणा गृहस्तम्भः । वीणा वल्लकी ।

**उ296: गादाभ्यामिष्णुच् (9.3.16)**

गेष्णुर्गायनः । देष्णुर्दाता ।

**उ297: कृत्यशूभ्यां क्स्नः (9.3.17)**

कृत्स्नम् । अक्ष्णमखण्डम् ।

**उ298: तिजेर्दीर्घश्च (9.3.18)**

तीक्ष्णम् ।

**उ299: श्लिषेरच्चोपधायाः (9.3.19)**

श्लक्ष्णम् ।

**उ300: यजिमनिशुन्धिदसिजनिभ्यो युच् (9.3.20)**

यज्युरध्वर्युः । मन्युर्दैन्ये क्रतौ क्रुधि । शुन्ध्युरग्निः । दस्युस्तस्करः । जन्युः शरीरी ।

**उ301: भुजिमृङ्भ्याम् युक्त्युकौ (9.3.21)**

भुज्युर्भाजनम् । मृत्युः ।

**उ302: सर्तेरयुः (9.3.22)**

सरयुर्नदी । अयूरिति पाठान्तरम् । सरयूः ।

**उ303: पानीविषिभ्यः पः (9.3.23)**

पाति रक्षत्यस्मादात्मानमिति पापम् । तद्योगात्पापः । नेपः पुरोहितः । बाहुलकाद्गुणाभावे नीपो वृक्षविशेषः । वेष्पः पानीयम् ।

## उ304: च्युवः किच्च (9.3.24)

च्युपो वक्रम् ।

## उ305: स्तुवो दीर्घश्च (9.3.25)

स्तूपः समुच्छ्रायः ।

## उ306: सुशृभ्यां निच्च (9.3.26)

चात्कित् । सूपः । बाहुलकादूत्वम् । शूर्पम् ।

## उ307: कुयुभ्यां च (9.3.27)

कुवन्ति मन्ण्डूका अस्मिन् कूपः । युवन्ति बध्नन्त्यस्मिन्पशुमिति यूपो यज्ञस्थम्भः ।

## उ308: खष्पशिल्पशष्पबाष्परूपपर्पतल्पाः (9.3.28)

सप्तैते पप्रत्ययान्ता निपात्यन्ते । खनतेर्नकारस्य षत्वम् । खष्पौ क्रोधबलात्कारौ शीलतेर्ह्रस्वः । शिल्पं कौशलम् । शसु हिंसायाम् निपातनात्षत्वम् । शष्पं बालतृणं प्रतिभाक्षयश्च । बधतेः पः । बाष्पो नेत्रजलोष्मणोः । बाष्पं च । रौतेर्दीर्घ । रूपं स्वभावे सौन्दैर्ये । पृ । पर्पं गृहं बालतृणं पङ्गुपीठं च । तल प्रतिष्ठाकरणे चुरादिणिचो लुक् । तल्पं शय्याट्टदारेषु ।

## उ309: स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच् (9.3.29)

'अयामन्त-२३११' इति णेरयादेशः । स्तनयित्नुः । हर्षयित्नुः । पोपयित्नुः गदयित्नुर्वावदूकः । मदयित्नुर्मदिरा ।

## उ310: कृहनिभ्यां क्त्नुः (9.3.30)

कृत्नुः शिल्पीः । हत्नुर्व्याधिः शस्त्रं च ।

## उ311: गमेः सन्वच्च (9.3.31)

जिगत्नुः ।

## उ312: दाभाभ्यां नुः (9.3.32)

दानुर्दाता । भानुः ।

## उ313: वचेर्गश्च (9.3.33)

वग्नुः ।

## उ314: धेट इच्च (9.3.34)

धयति सुतानिति धेनुः ।

## उ315: सुवः कित् (9.3.35)

सूनुः पुत्रेऽनुजे रवौ ।

**उ316: जहातेर्द्वेऽन्तलोपश्च (9.3.36)**

जह्नुः ।

**उ317: स्थो णुः (9.3.37)**

स्थाणुः कीले स्थिरे हरे ।

**उ318: अजिवृरीभ्यो निच्च (9.3.38)**

अजेर्वी । वेणुः । वर्णुर्नददेशभेदयोः । रेणुर्द्वयोः स्त्रियां धूलिः ।

**उ319: विषेः किच्च (9.3.39)**

विष्णुः ।

**उ320: कृदाधारार्चिकलिभ्यः कः (9.3.40)**

बाहुलकान्न कस्येत्संज्ञा । कर्को धवलघोटकः । दाको दाता । धाकोऽनड्वानाधारश्च । राका पौर्णमासी अर्कः । कल्कः पापाशये पापे दम्भे विड्किट्टयोरपि ।

**उ321: सृवृभूशुषिमुषिभ्यः कक् (9.3.41)**

सृक उत्पलवातयोः । वृकः श्वापदकाकयोः । भूकं छिद्रम् । शुष्कः । मुष्कोऽण्डम् ।

**उ322: शुकवल्कोल्काः (9.3.42)**

शुभेरन्त्यलीपः । शुकः । वल्कं वल्कलमस्त्रियाम् । उष दाहे । षस्य लः । उल्का ।

**उ323: इण्भीकापाशल्यतिमर्चिभ्यः कन् (9.3.43)**

एके मुख्यान्यकेवलाः । भेको मण्डूकमेषयोरिति विश्वभेदिन्यौ । काकः । पाकः शिशुः । शल्कं शकलम् । अत्कः पथिकः शरीरावयवश्च । मर्कः शरीरवायुः ।

**उ324: नौ हः (9.3.44)**

जहातेः कन् स्यान्नौ । निहाका गोधिका ।

**उ325: नौ सदेर्डिच्च (9.3.45)**

निष्कोऽस्त्री हेम्नि तत्पले ।

**उ326: स्यमेरीट् च (9.3.46)**

स्यमीको वल्मिकः वृक्षभेदश्च । इट्ह्रस्व इति केचित् । स्यमिकः ।

**उ327: अजियुधुनीभ्यो दीर्घश्च (9.3.47)**

वीकः स्याद्वातपक्षिणोः । यूका । धूको वायुः । नीको वृक्षविशेषः ।

**3328: ह्रियो रश्च लो वा (9.3.48)**

ह्रीका ह्लीका त्रपा मता ।

**3329: शकेरुनोन्तोन्त्युनयः (9.3.49)**

उन उन्त उन्ति उनि एते चत्वारः स्युः । शकुनः । शकुन्तः । शकुन्तिः । शकुनिः ।

**3330: भुवो झिच् (9.3.50)**

भवन्तिर्वर्तमानकालः । बहुलकादवेश्च । अवन्तिः । वदेर्वदन्तिः । किंवदन्ती जनश्रुतिः ।

**3331: कन्युच्क्षिपेश्च (9.3.51)**

चाद्भुवः । क्षिपण्युर्वसन्त इत्युज्ज्वलदत्तः । भवन्युः स्वामिसूर्ययोः ।

**3332: अनुङ्नदेश्च (9.3.52)**

चात्क्षिपेः । नदनुर्मेघः । क्षिपणुर्वातः ।

**3333: कृवृदारिभ्य उनन् (9.3.53)**

करुणो वृक्षभेदः स्यात्करुणा च कृपा मता । वरुणः । दारुणम् ।

**3334: त्रो रश्च लो वा (9.3.54)**

तरुणस्तलुनो युवा ।

**3335: क्षुधिपिशिमिथिभ्यः कित् (9.3.55)**

क्षुधुनो म्लेच्छजातिः । पिशुनः । मिथुनम् ।

**3336: फलेर्गुक् च (9.3.56)**

फल्गुनः पार्थः । प्रज्ञाद्यण् । फाल्गुनः ।

**3337: अशेर्लशश्च (9.3.57)**

लशुनम् ।

**3338: अर्जेर्णिलुक् च (9.3.58)**

अर्जुनः ।

**3339: तृणाख्यायां चित् (9.3.59)**

चित्त्वादन्तोदात्तः । अर्जुनं तृणम् ।

**3340: अर्तेश्च (9.3.60)**

अरुणः ।

**3341: अजियमिशीङ्भ्यश्च (9.3.61)**

वयुनं देवमन्दिरम् । यमुना । शयुनोऽजगरः ।

**उ342: वृतॄवदिहनिकमिकशिभ्यः सः (9.3.62)**

वर्सः । तर्सः प्लवसमुद्रयोः । वत्सः । वत्सम् । वक्षः । हंसः । कंसोऽस्त्री पानभाजनम् । कक्षं नक्षत्रम् ।

**उ343: प्लुषेरच्चोपधायाः (9.3.63)**

प्लक्षः ।

**उ344: मनेर्दीर्घश्च (9.3.64)**

मांसम् ।

**उ345: अशेर्देवने (9.3.65)**

अक्षः ।

**उ346: स्नुव्रश्चिकृत्यृषिभ्यः कित् (9.3.66)**

स्नुषा । वृक्षः । कुत्समुदकम् । ऋक्षं नक्षत्रम् ।

**उ347: ऋषेर्जातौ (9.3.67)**

ऋक्षोऽद्रिभेदे भल्लूके इति च ।

**उ348: उन्दिगुधिकुषिभ्यश्च (9.3.68)**

उत्सः प्रस्रवणम् । गुत्सः स्तबकः । उक्षो जठरम् ।

**उ349: गृधिपण्योर्दकौ च (9.3.69)**

गुत्सः कामदेवः । पक्षः ।

**उ350: अशेः सरः (9.3.70)**

अक्षरम् ।

**उ351: वसेश्च (9.3.71)**

वत्सरः ।

**उ352: सपूर्वाच्चित् (9.3.72)**

संवत्सरः ।

**उ353: कृधूमधिभ्यः कित् (9.3.73)**

बाहुलकान्न षत्वम् । कृसरः स्यात्तिलौदनम् । धूसरः । मत्सरः । मत्सरा मक्षिका ज्ञेया भम्भराली च सा मता ।

**उ354: पते रश्च लः (9.3.74)**

पत्सलः पन्थाः ।

**उ355: तन्यृषिभ्यां क्सरन् (9.3.75)**

तसरः सूत्रवेष्टने । ऋक्षरः ऋत्विक् ।

**उ356: पीयुक्वणिभ्यां कालन् ह्रस्वः संप्रसारणं च (9.3.76)**

पीयुः सौत्रः । पियालो वृक्षभेदः । कुणालो देशभेदः ।

**उ357: कटिकुषिभ्यां (9.3.77)**

कटाकुः पक्षी । कुषाकुरग्निः सूर्यश्च ।

**उ358: सर्तेर्दुक् च (9.3.78)**

सृदाकुर्वातसरितोः ।

**उ359: वृतेर्वृद्धिश्च (9.3.79)**

वार्ताकुः । बाहुलकादुकारस्य अत्वम् । वार्ताकम् ।

**उ360: पर्देर्नित्संप्रसारणमल्लोपश्च (9.3.80)**

पृदाकुर्वृश्चिके व्याघ्रे चित्रके च सरीसृपे ।

**उ361: सृयुवचिभ्योऽन्युजागूजक्नुचः (9.3.81)**

अन्युच् आगूच् अक्नुच् एते क्रमात्स्युः सरण्युर्मेघवातयोः । यवागूः । वचक्नुर्विप्रवाग्मिनोः ।

**उ362: आनकः शीङ्भियः (9.3.82)**

शयानकोऽजगरः । भयानकः ।

**उ363: आणको लुधुशिघिधाञ्भ्यः (9.3.83)**

लवाणकं दात्रम् । धवानको वातः । शिङ्घाणकः श्लेष्मा । पृषोदरादित्वात्पक्षे कलोपः । शिङ्घाणं नासिकामले । धाणको दीनारभागः ।

**उ364: उल्मुकदर्विहोमिनः (9.3.84)**

उष दाहे । षस्य लः मुकप्रत्ययश्च । उल्मुकं ज्वलदङ्गारम् । दृणातेर्विः । दर्विः । जुहोतेर्मिनिः । होमी ।

**उ365: ह्रियः कुक् रश्च लो वा (9.3.85)**

ह्लाकुः । ह्रीकुर्लज्जावान् ।

**उ366: हसिमृग्रिण्वाऽमिदमिलूपूधुर्विभ्यस्तन् (9.3.86)**

दशभ्यस्तन् स्यात् । तितुत्र- [3163] इति नेट् । हस्तः । मर्तः । गर्तः । एतः कुर्बरः । वातः । दन्तः । अन्तः । लोतः स्यादश्रुचिह्नयोः । पोतो बालवहित्रयोः । धूर्तः । बाहुलकात्तु सेर्दीर्घश्च । तूस्तं पापं । धूलिर्जटा च ।

## 3367: नञ्याप इट् च (9.3.87)

नापितः ।

## 3368: तनिमृङ्भ्यां किच्च (9.3.88)

ततम् । मृतम् ।

## 3369: अञ्जिघृसिभ्यः क्तः (9.3.89)

अक्तम् । घृतम् । सितम् ।

## 3370: दुतनिभ्यां दीर्घश्च (9.3.90)

दूतः । तातः ।

## 3371: जेर्मुट् चोदात्तः (9.3.91)

जीमूतः ।

## 3372: लोष्टपलितौ (9.3.92)

लुनातेः क्तः तस्य सुट् धातोर्गुणः । लोष्टम् । पलितम् ।

## 3373: हृश्याभ्यामितन् (9.3.93)

हरितश्येतौ वर्णभेदौ ।

## 3374: रुहे रश्च लो वा (9.3.94)

रोहितो मृगमत्स्ययोः । लोहितं रक्तम् ।

## 3375: पिशेः किच्च (9.3.95)

पिशितं मांसम् ।

## 3376: श्रुदक्षिस्पृहिगृहिभ्य आय्यः (9.3.96)

श्रवाय्यो यज्ञपशुः । दक्षाय्यो गरुडो गृध्रश्च । स्पृहयाय्यः । गृहयाय्यो गृहस्वामी ।

## 3377: दिधिषाय्यः (9.3.97)

दधातेर्द्वित्वमित्वं षुक् च । मित्र इव यो दिधिषाय्यः ।

## 3378: वृञ एण्यः (9.3.98)

वरेण्यः ।

**उ379: स्तुवः क्सेय्यश्छन्दसि (9.3.99)**

स्तुषेय्यं पुरुवर्पसम् ।

**उ380: राजेरन्यः (9.3.100)**

राजन्यो वह्निः ।

**उ381: शृरम्योश्च (9.3.101)**

शरण्यम् । रमण्यम् ।

**उ382: अर्तेर्निच्च (9.3.102)**

अरण्यम् ।

**उ383: पर्जन्यः (9.3.103)**

पृषु सेचने । षस्य जः । पर्जन्यः शक्रमेघयोः ।

**उ384: वदेरान्यः (9.3.104)**

वदान्यस्त्यागिवाग्मिनोः ।

**उ385: अमिनक्षियजिवधिपतिभ्योऽत्रन् (9.3.105)**

अमत्रं भाजनम् । नक्षत्रम् । यजत्रः । वधत्रमायुधम् । पतत्रं च तनूरुहम् ।

**उ386: गडेरादेश्च कः (9.3.106)**

कडत्रम् । डलयोरेकत्वस्मरणात् कलत्रम् ।

**उ387: वृञश्चित् (9.3.107)**

वरत्रा चर्ममयी रज्जुः ।

**उ388: सुविदेः कत्रः (9.3.108)**

सुविदत्रं कुटुम्बकम् ।

**उ389: कृतेर्नुम् च (9.3.109)**

कृन्तत्रं लाङ्गलम् ।

**उ390: भृमृदृशियजिपर्विपच्यमितमिनमिहर्येभ्योऽतच् (9.3.110)**

दशभ्योऽतच् स्यात् । भरतः । मरतो मृत्युः । दर्शतः सोमसूर्ययोः । यजतः ऋत्विक् । पर्वतः पचतोऽग्निः । अमतो रोगः । तमतस्तृष्णापरः । नमतः प्रह्वः । हर्यतोऽश्वः ।

**उ391: पृषिरञ्जिभ्यां कित् (9.3.111)**

पृषतो मृगो बिन्दुश्च । रजतम् ।

### उ392: खलतिः (9.3.112)

खलतेः सलोपः अतच्प्रत्ययान्तस्य इत्वं च । खलतिर्निष्केशशिराः ।

### उ393: शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः (9.3.113)

सप्तभ्योऽथः स्यात् । शयथोऽजगरः । शपथः । रवथः कोकिलः । गमथः पथिकः पन्थाश्च । वञ्चथो धूर्तः । वन्दीति पाठे वन्द्यते वा वन्दथः स्तोता स्तुत्यश्च । जीवथ आयुष्मान् । प्राणथो बलवान् । बाहुलकाच्छमिदमिभ्याम् । शमथस्तु शमः शान्तिर्दान्तिस्तु दमथो दमः ।

### उ394: भृञश्चित् (9.3.114)

भरथो लोकपालः ।

### उ395: रुदिविदिभ्यां ङित् (9.3.115)

रोदितीति रुदथः शिशुः । वेत्तीति विदथः ।

### उ396: उपसर्गे वसेः (9.3.116)

आवसथो गृहम् । संवसथो ग्रामः ।

### उ397: अत्यविचमितमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच् (9.3.117)

त्रयोदशभ्योऽसच् स्यात् । अततीत्यतसो वायुरात्मा च । अवतीत्यवसो राजा भानुश्च । चमत्यस्मिन् चमसः सोमपानपात्रम् । ताम्यत्यस्मिन् तमसोऽन्धकारः । नमसः अनुकूलः । रभसो वेगहर्षयोः । लभसो धनं याचकश्च । नभति नभ्यति वा नभस आकाशः । तपसः पक्षी चन्द्रश्च । पतसः पक्षी । पनसः कन्टकिफलः । पणसः पण्यद्रव्यम् । महसं ज्ञानम् ।

### उ398: वेञस्तुट् च (9.3.118)

बाहुलकादात्वाभावः । वेतसः ।

### उ399: वहियुभ्यां णित् (9.3.119)

वाहसोऽजगरः । यावसस्तृणसङ्घातः ।

### उ400: वयश्च (9.3.120)

वय गतौ । वायसः काकः ।

### उ401: दिवः कित् (9.3.121)

दिवसम् । दिवसः ।

### उ402: कृशृशलिकलिगर्दिभ्योऽभच् (9.3.122)

करभः । शरभः । शलभः । कलभः । गर्दभः ।

### उ403: ऋषिवृषिभ्यां कित् (9.3.123)

ऋषभः । वृषभः ।

## ३४०४: रुषेर्निलुष् च (9.3.124)

रुष हिंसायाम् । अस्मादभच् नित्कित्स्यात लुषादेशश्च । लुषभो मत्तदन्तिनि ।

## ३४०५: रासिवल्लिभ्यां च (9.3.125)

रासभः । वल्लभः ।

## ३४०६: जॄविशिभ्यां झच् (9.3.126)

जरन्तो महिषः । वेशन्तः पल्वलम् ।

## ३४०७: रुहिनन्दिजीविप्राणिभ्यः षिदाशिषि (9.3.127)

रोहन्तो वृक्षभेदः । नन्दन्तः पुत्रः । जीवन्त औषधम् । प्राणन्तो वायुः । षित्वान्ङीष् । रोहन्ती ।

## ३४०८: तॄभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च (9.3.128)

दशभ्यो झच् स्यात्स च षित् । तरन्तः समुद्रः । तरन्ती नौक । भवन्तः कालः । वहन्तो वायुः । वसन्तः ऋतुः । भासन्तः सूर्यः । साधन्तो भिक्षुः । गडेर्घटादित्वान्मित्त्वं ह्रस्वः । अयामन्ता- [2311] इति णेरयः । गण्डयन्तो जलदः । मण्डयन्तो भूषणम् । जयन्तः शक्रपुत्रः । नन्दयन्तो नन्दकः ।

## ३४०९: हन्तेर्मुट् हि च (9.3.129)

हेमन्तः ।

## ३४१०: भन्देर्नलोपश्च (9.3.130)

भदन्तः प्रव्रजितः ।

## ३४११: ऋच्छेररः (9.3.131)

ऋच्छरा वेश्या । बाहुलकाज्झर्जरझर्झरादयः ।

## ३४१२: अर्तिकमिभ्रमिचमिदेविवासिभ्यश्चित् (9.3.132)

षड्भ्योऽरश्चित् स्यात् । अररं कपाटम् । कमरः कामुकः । भ्रमरः । चमरः । देवरः । वासरः ।

## ३४१३: कुवः क्ररन् (9.3.133)

कुररः पक्षिभेदः ।

## ३४१४: अङ्गिमदिमन्दिभ्य आरन् (9.3.134)

अङ्गारः । मदारो वराहः । मन्दारः ।

**3415: गडेः कड च (9.3.135)**

कडारः ।

**3416: शृङ्गारभृङ्गारौ (9.3.136)**

शृभृञ्भ्यामारन्नुम् गुक् ह्रस्वश्च । शृङ्गारो रसः । भृङ्गारः कनकालुका ।

**3417: कञ्जिमृजिभ्यां चित् (9.3.137)**

कञ्जिः सौत्रो धातुः । कञ्जारो मयूरः । मार्जारः ।

**3418: कमेः किदुच्चोपधायाः (9.3.138)**

चिदित्यनुवृत्तेरन्तोदात्तः । कुमारः ।

**3419: तुषारादयश्च (9.3.139)**

तुषारः । कासारः । सहार आम्रभेदः ।

**3420: दीङो नुट् च (9.3.140)**

दीनारः सुवर्णाभरणम् ।

**3421: सर्तेरपः षुक् च (9.3.141)**

सर्षपः ।

**3422: उषिकुटिदलिकचिखजिभ्यः कपन् (9.3.142)**

उषपो वह्निसूर्ययोः । कुटपो मानभाण्डम् । दलपः प्रहरणम् । कचपं शाकपत्रम् । खजपं घृतम् ।

**3423: क्वणेः संप्रसारणं च (9.3.143)**

कुणपम् ।

**3424: कपश्चाक्रवर्मणस्य (9.3.144)**

स्वरे भेदः ।

**3425: विटपपिष्टपविशिपोलपाः (9.3.145)**

चत्वारोऽमी कपन् प्रत्ययान्ताः । विट शब्दे । विटपः । विशतेरादेः पः । प्रत्ययस्य तुट् । षत्वम् । पिष्टपं भुवनम् । विशतेः प्रत्ययादेरित्वम् । विशिपं मन्दिरम् । वलतेः संप्रसारणम् । उलपं कोमलं तृणम् ।

**3426: वृतेस्तिकन् (9.3.146)**

वर्तिका ।

**3427: कृतिभिदिलतिभ्यः कित् (9.3.147)**

कृत्तिका भित्तिका भित्तिः । लत्तिका गोधा ।

**उ428: इष्यशिभ्यां तकन् (9.3.148)**

इष्टका । अष्टका ।

**उ429: इणस्तशन्तशसुनौ (9.3.149)**

एतशो ब्राह्मणः । स एव एतशाः ।

**उ430: वीपतिभ्यां तनन् (9.3.150)**

वी गत्यादौ । वेतनम् । पत्तनम् ।

**उ431: दृदलिभ्यां भः (9.3.151)**

दर्भः । 'दल्भः स्यादृषिचक्रयोः' ।

**उ432: अर्तिगृभ्यां भन् (9.3.152)**

अर्भः । गर्भः ।

**उ433: इणः कित् (9.3.153)**

इभः ।

**उ434: असिसञ्जिभ्यां क्थिन् (9.3.154)**

अस्थि । सक्थि ।

**उ435: प्लुषिकुषिशुषिभ्यः । क्सिः (9.3.155)**

प्लुक्षिर्वह्निः । कुक्षिः । शुक्षिर्वातः ।

**उ436: अशेर्नित् (9.3.156)**

अक्षि ।

**उ437: इषेः क्सुः (9.3.157)**

इक्षुः ।

**उ438: अवितृस्तृतन्त्रिभ्यः ईः (9.3.158)**

अवीर्नारी रजस्वला । तरीर्नौः । स्तरीर्धूमः । तन्त्रीर्वीणादेर्गुणः ।

**उ439: यापोः किद्द्वे च (9.3.159)**

ययीरश्वः । पपीः स्यात्सोमसूर्ययोः ।

**उ440: लक्षेर्मुट् च (9.3.160)**

लक्ष्मीः ।

## उ441: वातप्रमीः (9.4.1)

वातशब्दे उपपदे माधातोरीप्रत्ययः स च कित् । वातप्रमीः ॥ अयं स्त्रीपुंसयोः ।

## उ442: ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः कत्निच्यतुजलिजिष्ठुजिष्ठजिसन्स्यनिथिनुल्यसासानुकः (9.4.2)

द्वादशभ्यः क्रमात्स्युः । अर्तेः कत्निच् यण् । बद्धमुष्टिः करो रत्निः सोऽरत्निः प्रसृताङ्गुलिः । तनोतेर्यतुच् । तन्यतुर्वायू रात्रिश्च अञ्जेरलिच् । अञ्जलिः । वनेरिष्टुच् । वनिष्टु स्थविरान्त्रम् । अञ्जेरिष्टुच् । अञ्जिष्ठो भानुः । अर्पयतेरिसन् । अर्पिसोऽग्रमांसम् । मदेः स्यन् । मत्स्यः । अतेरिथिन् । अतिथिः । अङ्गेरुलिः । अङ्गुलिः । कौतेरसः । कवसः । अच इत्येके । कवचम् । यौतेरासः । यवासो दुरालभा । कृशेरानुक् । कृशानुः ।

## उ443: श्रः करन् (9.4.3)

उत्तरसूत्रे किद्ग्रहणादिह ककारस्य नेत्वम् । शर्करा ।

## उ444: पुषः कित् (9.4.4)

पुष्करम् ।

## उ445: कलश्च (9.4.5)

पुष्कलम् ।

## उ446: गमेरिनिः (9.4.6)

गमिष्यतीति गमी ।

## उ447: आङि णित् (9.4.7)

आगामी ।

## उ448: भुवश्च (9.4.8)

भावी ।

## उ449: प्रे स्थः (9.4.9)

प्रस्थायी ।

## उ450: परमे कित् (9.4.10)

परमेष्ठी ।

## उ451: मन्थः (9.4.11)

मन्थतेरिनिः कित्स्यात् । कित्त्वान्नकारलोपः मन्थाः । मन्थानौ । मन्थानः ।

## उ452: पतः स्थ च (9.4.12)

पन्थाः । पन्थानौ ।

### उ3453: खजेराकः (9.4.13)

खजाकः पक्षी ।

### उ3454: बलाकादयश्च (9.4.14)

बलाका । शलाका । पताका ।

### उ3455: पिनाकादयश्च (9.4.15)

पातेरित्वम् नुम् च । क्लीबपुंसोः पिनाकः स्याच्छूलशङ्करधन्वनोः । तड आघाते । तडाकः ।

### उ3456: कषिदूषिभ्यामीकन् (9.4.16)

कषिका पक्षिजातिः । दूषिका नेत्रयोर्मलम् ।

### उ3457: अनिहृषिभ्याम् किच्च (9.4.17)

अनीकम् । हृषीकम् ।

### उ3458: चङ्कणः कङ्कणश्च (9.4.18)

कण शब्दे । अस्माद्यङ्गन्तादीकन् धातोः कङ्कणादेशश्च । घन्टिकायां कङ्कणीका सैव प्रतिसरापि च ।

### उ3459: शॄपॄवृञां द्वेरुक् चाभ्यासश्च (9.4.19)

शर्करीको हिंस्रः । पर्परीको दिवाकरः । वर्वरीकः कुटिलकेशः ।

### उ3460: पर्फरीकादयश्च (9.4.20)

स्फुर स्फुरणे अस्मादीकन् धातोः पर्फरादेशः । पर्फरीकं किसलयम् । दर्दरीकं वादित्रम् । झर्झरीकं शरीरम् । तित्तिडीको वृषभेदः (ग) चरेर्नु च । चञ्चरीको भ्रमरः । मर्मरीको हीनजनः । कर्करीका गलन्तिका । पुणतेः । पुन्डरीकं वादित्रम् । पुन्डरीको व्याघ्रोऽग्निर्दिग्गजश्च ।

### उ3461: ईषः किद्ध्रस्वश्च (9.4.21)

इषीका शलाका ।

### उ3462: ऋजेश्च (9.4.22)

ऋजिकः उपहतः ।

### उ3463: सर्तेर्नुम् च (9.4.23)

सृणिका लाला ।

### उ3464: मृडः कीकच्कङ्कणौ (9.4.24)

मृडीको मृगः । मृडङ्कणः शिशुः ।

**उ3465: अलीकादयश्च (9.4.25)**

कीकजन्ता निपात्यन्ते । अल भूषणादौ । अलीकं मिथ्या । विपूर्वाद्व्यलीकं विप्रियं खेदश्च । वलीकं पटलप्रान्ते इत्यादि ।

**उ3466: कृतॄभ्यामीषन् (9.4.26)**

करीषोऽस्त्री शुष्कगोमये । करीषः तरीता ।

**उ3467: शॄपॄभ्यां किच्च (9.4.27)**

शिरीषः । पुरीषम् ।

**उ3468: अर्जेर्ऋज च (9.4.28)**

ऋजीषं पिष्टपचनम् ।

**उ3469: अम्बरीषः (9.4.29)**

अयं निपात्यते । अबि शब्दे । अम्बरीषः पुमान् भाष्ट्रम् ।

**उ3470: कॄशॄपॄकटिपटिशौटिभ्य ईरन् (9.4.30)**

करीरो वंशाङ्कुरः । शरीरम् । परीरम् । फलम् । कटीरः कन्दरो जघनप्रदेशश्च । पटीरश्चन्दनः कन्टकः कामश्च । शौटीरस्त्यागिवीरयोः ब्राह्मणादित्वात् ष्यञ् । शौटीर्यम् ।

**उ3471: वशेः कित् (9.4.31)**

वशीरम् ।

**उ3472: कशेर्मुट् च (9.4.32)**

काश्मीरो देशः ।

**उ3473: कृञ उच्च (9.4.33)**

कुरीरं मैथुनम् ।

**उ3474: घसेः किश्च (9.4.34)**

क्षीरम् ।

**उ3475: गभीरगम्भीरौ (9.4.35)**

गभेर्भः पक्षे नुम् च ।

**उ3476: विषा विहा (9.4.36)**

स्यतेर्जहातेश्च विपूर्वाभ्यामाप्रत्यः । विषा बुद्धिः । विहा स्वर्गः । अव्यये इमे ।

**उ3477: पच एलिमच् (9.4.37)**

पचेलिमो वह्निरव्योः ।

### 3478: शीङो धुक्लक्वलञ्वालनः (9.4.38)

चत्वारः प्रत्ययाः स्युः । शीधु मद्यम् । शीलं स्वभावः । शैवलः शेवालम् । बाहुलकाद्ह्रस्य पोऽपि । शेवालं शैवलो न स्त्री शेपालो जलनीलिका ।

### 3479: मृकणिभ्यामूकोकणौ (9.4.39)

मरूको मृगः । काणूकः काकः ।

### 3480: वलेरूकः (9.4.40)

वलूकः पक्षी उत्पलमूलं च ।

### 3481: उलूकादयश्च (9.4.41)

वलेः संप्रसारणमूकश्च । उलूकाविन्द्रपेचकौ । वावदूको वक्ता । भल्लूकः । (ग) शमेर्बुक् च ॥ शम्बूको जलशुक्तिः ।

### 3482: शलिमन्डिभ्यामूकण् (9.4.42)

शालूकं कन्दविशेषः । मण्डूकः ।

### 3483: नियो मिः (9.4.43)

नेमिः ।

### 3484: अर्तेरूच्च (9.4.44)

ऊर्मिः ।

### 3485: भुवः कित् (9.4.45)

भूमिः ।

### 3486: अश्नोते रश् च (9.4.46)

रश्मिः किरणो रज्जुश्च ।

### 3487: दल्मिः (9.4.47)

दल विशरणे । दल्मिरिन्द्रायुधम् ।

### 3488: वीज्याज्वरिभ्यो निः (9.4.48)

बाहुलकाण्णत्वम् । वेणिः स्यात्केशविन्यासः प्रवेणी च स्त्रियामुभे । ज्यानिः । जूर्णिः ।

### 3489: सृवृषिभ्यां कित् (9.4.49)

सृणिरङ्कुशः । वृष्णिः क्षत्रियमेषयोः ।

### 3490: अङ्गेर्नलोपश्च (9.4.50)

अग्निः ।

## उ491: वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् (9.4.51)

वह्निः । श्रेणिः । श्रोणिः । योनिः । द्रोणिः । ग्लानिः । हानिः । तूर्णिः । बाहुलकान्म्लानिः ।

## उ492: घृणिपृश्निपार्ष्णिचूर्णिभूर्णि (9.4.52)

एते पञ्च निपात्यन्ते । घृणिः किरणः । स्पृशतेः सलोपः पृश्निरल्पशरीरः । पृषेर्वृद्धिश्च । पार्ष्णिः पादतलम् । चरेरुपधाया उत्वम् । चूर्णिः कपर्दकशतम् । बिभर्तेरुत्वम् । भूर्णिर्धरणी ।

## उ493: वृदॄभ्यां विन् (9.4.53)

वर्विर्घस्मरः । दर्विः ।

## उ494: जॄशॄस्तॄजागृभ्यः क्विन् (9.4.54)

जीर्विः पर्शुः । शीर्विर्हिंस्रः । स्तीर्विरध्वर्युः । जागृविर्नृपः ।

## उ495: दिवो द्वे दीर्घश्चाभ्यासस्य (9.4.55)

दीदिविः स्वर्गमोक्षयोः ।

## उ496: कृविघृष्विछविस्थविकिकीदिवि (9.4.56)

कृविस्तन्तुवायद्रव्यम् । घृष्विर्वराहः । छास्थोर्ह्रस्वत्वं च । छविर्दीप्तिः । स्थविस्तन्तुवायः । दीव्यतेः किकीपूर्वात् किकीदिविश्चाषः । बाहुलकाद्ध्रस्वदीर्घयोर्विनिमयः । चाषेण किकीदीविना ।

## उ497: पातेर्डतिः (9.4.57)

पतिः ।

## उ498: शकेर्ऋतिन् (9.4.58)

शकृत् ।

## उ499: अमेरतिः (9.4.59)

अमतिः कालः ।

## उ500: वहिवस्यर्तिभ्यश्चित् (9.4.60)

वहतिः पवनः । वसतिर्गृहयामिन्योः । अरतिः क्रोधः ।

## उ501: अञ्चेः को वा (9.4.61)

अङ्कतिः । अञ्चतिर्वातः ।

## उ502: हन्तेरंह च (9.4.62)

हन्तेरतिः स्यादंहादेशश्च धातोः । हन्ति दुरितमनया अंहतिर्दानम् प्रादेशनं निर्वपणमपवर्जनमंहतिः ।

## उ503: रमेर्नित् (9.4.63)

रमतिः कालकामयोः ।

**उ504: सूङः क्रिः (9.4.64)**

सूरिः ।

**उ505: अदिशदिभूशुभिभ्यः क्रिन् (9.4.65)**

अद्रिः । शद्रिः । शर्करा । भूरि प्रचुरम् । शुभ्रिर्ब्रह्मा ।

**उ506: वङ्क्र्यादयश्च (9.4.66)**

क्रिन्नन्ता निपात्यन्ते । वङ्क्रिर्वाद्यभेदो गृहदारु पार्श्वास्थि च । वप्रिः क्षेत्रम् । अंह्रिरङ्घ्रिश्च चरणः । तदिः सौत्रो धातुः । तन्द्रिर्मोहः बाहुलकाद्गुणः । भेरिः ।

**उ507: राशदिभ्यां त्रिप् (9.4.67)**

रात्रिः शत्रिः । कुञ्जरः ।

**उ508: अदेस्त्रिनिश्च (9.4.68)**

चात्रिप् । अत्री । अत्रिणौ । अत्रिणः । अत्रिः । अत्री । अत्रयः ।

**उ509: पतेरत्रिन् (9.4.69)**

पतत्रिः पक्षी ।

**उ510: मृकणिभ्यामीचिः (9.4.70)**

मरीचिः कणीचिः पल्लवो निनादश्च ।

**उ511: श्वयतेश्चित् (9.4.71)**

श्वयीचिर्व्याधिः ।

**उ512: वेञो डिच्च (9.4.72)**

वीचिस्तरङ्गः । नञ्समासे अवीचिर्नरकभेदः ।

**उ513: ऋहनिभ्यामूषन् (9.4.73)**

अरूषः सूर्यः । हनूषो राक्षसः ।

**उ514: पुरः कुषन् (9.4.74)**

पुर अग्रगमने । पुरुषः । अन्येषामपि– 3539 इति दीर्घः । पूरुषः ।

**उ515: पॄनहिकलिभ्य उषच् (9.4.75)**

परुषम् । नहुषः । कलुषम् ।

**उ516: पीयेरूषन् (9.4.76)**

पीय इति सौत्रो धातुः । पीयूषम् । बाहुलकाद्गुणे पेयूषोऽभिनवं पयः ।

**उ3517: मस्जेर्नुम् च (9.4.77)**

मञ्जूषा ।

**उ3518: गडेश्च (9.4.78)**

गण्डूषः । गण्डूषा ।

**उ3519: अर्तेररुः (9.4.79)**

अररुः शत्रुः । अररू । अररवः ।

**उ3520: कुटः किच्च (9.4.80)**

कुटरुर्वस्त्रगृहम् । कित्वप्रयोजनं चिन्त्यम् ।

**उ3521: शकादिभ्योऽटन् (9.4.81)**

शकटोऽस्त्रियाम् । शकिर्गत्यर्थः । कङ्कटः सन्नाहः । देवटः शिल्पी । करट इत्यादि ।

**उ3522: कृकदिकडिकटिभ्योऽम्बच् (9.4.82)**

करम्बं व्यामिश्रम् । कदिकडी सौत्रौ । कदम्बो वृक्षभेदः । कडम्बोऽग्रभागः । कटम्बो वादित्रम् ।

**उ3523: कदेर्णित्पक्षिणि (9.4.83)**

कादम्बः कलहंसः ।

**उ3524: कलिकर्द्योरमः (9.4.84)**

कलमः । कर्दमः ।

**उ3525: कुणिपुल्योः किन्दच् (9.4.85)**

कुण शब्दोपकरणयोः । कुणिन्दः शब्दः । पुलिन्दो जातिविशेषः ।

**उ3526: कुपेर्वा वश्च (9.4.86)**

कुपिन्दकुविन्दौ तन्तुवाये ।

**उ3527: नौ षञ्जेर्घथिन् (9.4.87)**

निषङ्गथिरालिङ्गकः ।

**उ3528: उद्यर्तेश्चित् (9.4.88)**

उदरथिः समुद्रः ।

**उ3529: सर्तेर्णिच्च (9.4.89)**

सारथिः ।

### उ530: खर्जिपिञ्जादिभ्य ऊरोलचौ (9.4.90)

खर्जूरः । कर्पूरः । वल्लूरं शुष्कमांसम् । पिञ्जूलं कुशवर्तिः । लङ्गेर्वृद्धिश्च ॥ लाङ्गूलम् । कुसूलः । तमेर्बुग्वृद्धिश्च । ताम्बूलम् । शृणातेर्दुग्वृद्धिश्च । शार्दूलः । दुक्कोः कुक्क । दुकूलम् । कुकूलम् ।

### उ531: कुवश्चट् दीर्घश्च (9.4.91)

कूची चित्रलेखनिका ।

### उ532: समीणः (9.4.92)

समीचः समुद्रः । समीची हरिणी ।

### उ533: सिवेष्टेरू च (9.4.93)

सूचो दर्भाङ्कुरः । सूची ।

### उ534: शमेर्बन् (9.4.94)

शम्बो मुसलम् ।

### उ535: उल्बादयश्च (9.4.95)

बन्नन्ता निपात्यन्ते । उच समवाये । चस्य लत्वं गुणाभावश्च । उल्बो गर्भाशयः । शुल्बं ताम्रम् । बिम्बम् ।

### उ536: स्थः स्तोऽम्बजबकौ (9.4.96)

तिष्ठतेरम्बच् अबक एतौ स्तस्तादेशश्च । स्तम्बो गुच्छस्तृणादिनः । स्तबकः पुष्पगुच्छः ।

### उ537: शाशपिभ्यां ददनौ (9.4.97)

शादो जम्बालशष्पयोः ।

### उ538: अब्दादयश्च (9.4.98)

शब्दः । अवतीत्यशब्दः ॥ (ग) कौतेर्नुम् च ॥ कुन्दः ।

### उ539: वलिमलितनिभ्यः कयन् (9.4.99)

वलयम् । मलयः । तनयः ।

### उ540: वृहोः षुग्दुकौ च (9.4.100)

वृषयः आश्रयः । हृदयम् ।

### उ541: मिपीभ्यां रुः (9.4.101)

मेरुः । पेरुः सूर्यः । बाहुलकात् पिबतेरपि । संवत्सरवपुः पारुः पेरुर्वासीर्दिनप्रणीः ।

**उ3542: जत्र्वादयश्च (9.4.102)**

जत्रु जत्रुणी । अश्रु । अश्रुणी ।

**उ3543: रुशातिभ्यां क्रुन् (9.4.103)**

रुरुर्मृगभेदः । शातयतीति शत्रुः । प्रज्ञादौ पाठाद्ध्रस्वत्वम् ।

**उ3544: जनिदाच्युसृवृमदिषमिनमिभृञ्भ्य इत्वन्त्वन्त्नण्क्रिन्शक्स्यढडटाटचः (9.4.104)**

जनित्वौ मातापितरौ । दात्वो दाता । च्यौत्नो गन्ता अण्डजः क्षीणपुण्यश्च । सृणिरङ्कुशश्चन्द्रः सूर्यो वायुश्च । वृशः आर्द्रकं मूलकं च । मत्स्यः । षण्ढः । डित्वाट्टिलोपः । नमतीति नटः शैलूषः । बिभर्ति भरटः कुलालो भृतकश्च ।

**उ3545: अन्येभ्योऽपि दृश्यन्ते (9.4.105)**

पेत्वममृतम् भृशम् ।

**उ3546: कुसेरुम्भोमेदेताः (9.4.106)**

कुसुम्भम् । कुसुमम् । कुसीदम् । कुसितो जनपदः ।

**उ3547: सानसिवर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वलपल्वलधिष्ण्यशल्याः (9.4.107)**

सनोतेरसिप्रत्यय उपधावृद्धिः । सानसिर्हिरण्यम् । वृञो नुक् च । वर्णसिर्जलम् । पृ पर्णसिर्जलग्रहणम् । तड आघाते तण्डुलाः । अकि लक्षणे उशच् । अङ्कुशः । चषेरालच् । चषालो यूपकटकः । इल्वलो दैत्यभेदः । पल्वलम् । ञिधृषा । ऋकारश्च इकारः । धिष्ण्यम् । शलेर्यः शल्यम् । वा पुंसि शल्यं शङ्कुर्ना ।

**उ3548: मूशक्यबिभ्यः क्लः (9.4.108)**

मूलम् । शक्लः प्रियंवदे । अम्ब्लो रसः । बाहुलकादमेः । अम्लः ।

**उ3549: माछाससिभ्यो यः (9.4.109)**

माया । छाया । सस्यम् । बाहुलकात्सुनोतेः । सव्यं दक्षिणवामयोः ।

**उ3550: जनेर्यक् (9.4.110)**

ये विभाषा [2319] । जन्यं युद्धम् । जाया भार्या ।

**उ3551: अघ्न्यादयश्च (9.4.111)**

यगन्ता निपात्यन्ते । हन्तेर्युक् अडागम उपधालोपश्च । अघ्न्या माहेयी । अघ्न्यः प्रजापतिः । कनी दीप्तौ । कन्या । बवयोरैक्यम् । वन्ध्याः ।

**उ3552: स्नामदिपद्यर्तिपॄशकिभ्यो वनिप् (9.4.112)**

स्नावा रसिकः । मद्वा शिवः । पद्वा पन्थाः । अर्वा तुरङ्गगर्ह्योः । पर्वा ग्रन्थिः प्रस्तावश्च । शक्वा हस्ती । ङीब्रौ । शक्वरी अङ्गुलिः ।

**उ553: शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः क्वनिप् (9.4.113)**

शीवा अजगरः । क्रुश्वा सृगालः । रुह्वा वृक्षः । जित्वा जेता । क्षित्वा वायुः । सृत्वा प्रजापतिः । धृत्वा विष्णुः ।

**उ554: ध्याप्योः संप्रसारणं च (9.4.114)**

धीवा कर्मकरः । पीवा स्थूलः ।

**उ555: अदेर्ध च (9.4.115)**

अध्वा ।

**उ556: प्र ईरशदोस्तुट् च (9.4.116)**

प्रेत्वा प्रशत्वा च सागरः । प्रेत्वरी प्रशत्वरी च नदी ।

**उ557: सर्वधातुभ्य इन् (9.4.117)**

पचिरग्निः । तुडिः । तुण्डिः । वलिः । वटिः । यजिः । देवयजिः । काशत इति काशिः । यतिः । मल्लिः । केलिः । मसी परिणामे । मसिः । बाहुलकाद्गुणः । कोटिः । हेलिः । बोधिः । नन्दिः । कलिः ।

**उ558: हृपिषिरुहिवृतिविदिछिदिकीर्तिभ्यश्च (9.4.118)**

हरिर्विष्णावहाविन्द्रे भेके सिंहे हये रवौ । चन्द्रे कीले प्लवङ्गे च यमे वाते च कीर्तितः । पेषिर्वज्रम् । रोहिर्व्रती । वर्तिः । वेदिः । छदिश्छेत्ता । कीर्तिः ।

**उ559: इगुपधात्कित् (9.4.119)**

कृषिः । ऋषिः । शुचिः । लिपिः । बाहुलकाद्वत्वे लिबिः । तूल निष्कर्षे । तूलिः । तूली कूर्चिका ।

**उ560: भ्रमेः संप्रसारणं च (9.4.120)**

भृमिर्वातः । बाहुलकाद्भ्रमिः ।

**उ561: क्रमितमिशतिस्तम्भामत इच्च (9.4.121)**

क्रिमिः । संप्रसारणानुवृत्तेः कृमिरपि । तिमिर्मत्स्यभेदः । शितिर्मेचकशुक्लयोः । स्तिम्भिः समुद्रः ।

**उ562: मनेरुच्च (9.4.122)**

मुनिः ।

## 3563: वर्णेर्बलिश्चाहिरण्ये (9.4.123)

वर्णिः सौत्रः । अस्य बलिरादेशः । करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम् । हिरण्ये तु वर्णिः सुवर्णम् ।

## 3564: वसिवपियजिराजिव्रजिसदिहनिनाशिवाशिवारिभ्य इञ् (9.4.124)

वासिश्छेदनवस्तुनि । वापिः । वापी । याजिर्यष्टा । राजिः । राजी । व्राजिर्वातालिः । सादिः सारथिः । निघातिर्लोहघातिनी । वाशिरग्निः । वादिर्विद्वान् । वारिर्गजबन्धनी । जले तु क्लीबम् । बाहुलकाद्वारिः पथिकसंहतौ ।

## 3565: नहो भश्च (9.4.125)

नाभिः स्यात्क्षत्रिये पुंसि । प्राण्यङ्गे तु स्त्रियाम् । पुंस्यपीति केचित् ।

## 3566: कृषेर्वृद्धिश्छन्दसि (9.4.126)

कार्षिः ।

## 3567: श्रः शकुनौ (9.4.127)

शारिः । शारिका ।

## 3568: कृञ उदीचां कारुषु (9.4.128)

कारिः शिल्पी ।

## 3569: जनिघसिभ्यामिण् (9.4.129)

जनिर्जननम् । घासिर्भक्ष्यमग्निश्च ।

## 3570: अज्यतिभ्यां च (9.4.130)

आजिः संग्रामः । आतिः पक्षी ।

## 3571: पादे च (9.4.131)

पदाजिः । पदातिः ।

## 3572: अशिपणाय्यो रुडायलुकौ च (9.4.132)

अशे रुट् । राशिः पुञ्जः । पणायतेरायलुक् । पाणिः करः ।

## 3573: वातेर्डिच्च (9.4.133)

विः पक्षी । स्त्रियां वीत्यपि ।

## 3574: प्रे हरतेः कूपे (9.4.134)

प्रहिः कूपः ।

## 3575: नौ व्यो यलोपः पूर्वस्य च दीर्घः (9.4.135)

व्येञ इण् स्याद् यलोपश्च नेर्दीर्घः । नीविः । नीवी वस्त्रग्रन्थौ मूलधने च ।

**3576: समाने ख्यः स चोदात्तः (9.4.136)**

समानशब्दे उपपदे ख्या इत्यस्मादिण् स्यात्स च डिच्च यलोपश्च समानस्य तूदात्तः स इत्यादेशश्च । समानं ख्यायते जनैरिति सखा ।

**3577: आङि श्रिहनिभ्यां ह्रस्वश्च (9.4.137)**

इण् स्यात्स च डित् आङो ह्रस्वश्च । स्त्रियः पाल्यश्रिकोटयः । सर्पे वृत्रासुरेऽप्यहिः ।

**3578: अच इः (9.4.138)**

रविः । पविः । तरिः । कविः । अरिः । अलिः ।

**3579: खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचरिभ्यश्च (9.4.139)**

खनिः । कषिर्हिंस्रः । अजिः । असिः । वसिर्वस्त्रम् । वनिरग्निः । सनिर्भक्तिर्दानं च । ध्वनिः । ग्रन्थिः । चरिः पशुः ।

**3580: वृतेश्छन्दसि (9.4.140)**

वर्तिः ।

**3581: भुजेः किच्च (9.4.141)**

भुजिः ।

**3582: कृगृशॄपॄकुटिभिदिछिदिभ्यश्च (9.4.142)**

इः कित्स्यात् । किरिर्वराहः । गिरिर्गोत्राक्षिरोगयोः । गिरिणा काणः गिरिकाणः । शिरिः शलभो हन्ता च । पुरिर्नगरं राजा नदी च । कुटिः शाला शरीरं च । भिदिर्वज्रम् । छिदिः परशुः ।

**3583: कुडिकम्प्योर्नलोपश्च (9.4.143)**

कुडि दाहे । कुडिर्देहः । कपिः ।

**3584: सर्वधातुभ्यो मनिन् (9.4.144)**

क्रियत इति कर्म । चर्म । भस्म । जन्म । शर्म । स्थाम बलम् । इस्मन्- [2915] इति ह्रस्वः । छद्म । सुत्रामा ।

**3585: बृंहेर्नोच्च (9.4.145)**

नकारस्याकारः । ब्रह्म तत्वं तपो वेदो ब्रह्मा विप्रः प्रजापतिः ।

**3586: अशिशकिभ्यां छन्दसि (9.4.146)**

अश्मा । शक्मा ।

**उ3587: हृभृधृसृस्तृशृभ्य इमनिच् (9.4.147)**

हरिमा कालः । भरिमा कुटुम्बम् । धरिमा रूपम् । सरिमा वायुः । स्तरिमा तल्पम् । शरिमा प्रसवः ।

**उ3588: जनिमृङ्भ्यामिमनिन् (9.4.148)**

जनिमा जन्म । मरिमा मृत्युः ।

**उ3589: वेञः सर्वत्र (9.4.149)**

छन्दसि भाषायां चेत्यर्थः । वेमा तन्तुवायदण्डः । अर्धर्चादिः । सामनी वेमनी इति वृत्तिः ।

**उ3590: नामन् सीमन् व्योमन् रोमन् लोमन् पाप्मन् ध्यामन् (9.4.150)**

सप्त अमी निपात्यन्ते । म्नायतेऽनेनेति नाम । सिनोतेर्दीर्घः । सीमा सीमानौ । सीमानः । पक्षे डाप् । सीमे सीमाः । व्येञोऽन्त्यस्योत्वं गुणः । व्योम । रौतेः । रोम । लोम । पाप्मा पापम् । ध्याम परिमाणं तेजश्च ।

**उ3591: मिथुने मनिः (9.4.151)**

उपसर्गक्रियासंबन्धो मिथुनम् । स्वरार्थमिदम् । सुशर्मा ।

**उ3592: सातिभ्यां मनिन्मनिणौ (9.4.152)**

स्यति । साम । सामनी । आत्मा ।

**उ3593: हनिमशिभ्यां सिकन् (9.4.153)**

हंसिका हंसयोषिति । मक्षिका ।

**उ3594: कोररन् (9.4.154)**

कवरः ।

**उ3595: गिर उडच् (9.4.155)**

गरुडः ।

**उ3596: इन्देः कमिन्नलोपश्च (9.4.156)**

इदम् ।

**उ3597: कायतेर्डिमिः (9.4.157)**

किम् ।

**उ3598: सर्वधातुभ्यः ष्ट्रन् (9.4.158)**

वस्त्रम् । अस्त्रम् । शस्त्रम् । इस्मन्- [2915] इति ह्रस्वत्वम् । छादनाच्छत्रम् ।

**उ3599: भ्रस्जिगमिनमिहनिविश्यशां वृद्धिश्च (9.4.159)**

भ्राष्ट्रः । गात्रं शकटम् । नात्रं स्तोत्रम् । हात्रं मरणम् । वैष्ट्रं विष्टपम् । आष्ट्रमाकाशम् ।

**उ600: दिवेर्द् युच्च (9.4.160)**

द्यौत्रम् ।

**उ601: उषिखनिभ्यां कित् (9.4.161)**

उष्ट्रः । खात्रं खनित्रं जलाधारश्च ।

**उ602: सिविमुच्योष्टेरू च (9.4.162)**

सूत्रम् । मूत्रम् ।

**उ603: अमिचिमिदिशसिभ्यः क्त्रः (9.4.163)**

आन्त्रम् । दित्रम् । मित्रम् । शस्त्रम् ।

**उ604: पुवो ह्रस्वश्च (9.4.164)**

पुत्रः ।

**उ605: स्त्यायतेर्ड्रट् (9.4.165)**

स्त्री ।

**उ606: गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः (9.4.166)**

गोत्रं स्यान्नामवंशयोः । गोत्रा पृथिवी । धर्त्रं गृहम् । वेत्रम् । पक्त्रम् । वक्त्रम् । यन्त्रम् । सत्त्रम् । क्षत्त्रम् ।

**उ607: हुयामाश्रुभसिभ्यस्त्रन् (9.4.167)**

होत्रम् । यात्रा । मात्रा । श्रोत्रम् । भस्त्रा ।

**उ608: गमेरा च (9.4.168)**

गात्रम् ।

**उ609: दादिभ्यश्छन्दसि (9.4.169)**

दात्रम् । पात्रम् ।

**उ610: भूवादिगृभ्यो णित्रन् (9.4.170)**

भावित्रम् । वादित्रम् । गादित्रमोदनम् ।

**उ611: चरेर्वृत्ते (9.4.171)**

चारित्रम् ।

**उ612: अशित्रादिभ्य इत्रोत्रौ (9.4.172)**

अशित्रम् । वहित्रम् । धरित्री मही । त्रैङ् एवमादिभ्य उत्रः । तोत्रं प्रहरणम् । वृञ् वरुत्रं प्रावरणम् ।

### 3613: अमेर्द्विषति चित् (9.4.173)

अमित्रः शत्रुः ।

### 3614: आः समिण्निकशिभ्याम् (9.4.174)

संपूर्वादिणो निपूर्वात्कषेश्च आ स्यात् । स्वरादित्वादव्ययत्वम् । समया । निकषा ।

### 3615: चित्तेः कणः कश्च (9.4.175)

बाहुलकादगुणः । चिक्कणं मसृणं स्निग्धम् ।

### 3616: सूचेः स्मन् (9.4.176)

सूक्ष्मम् ।

### 3617: पातेर्डुम्सुन् (9.4.177)

पुमान् ।

### 3618: रुचिभुजिभ्यां किष्यन् (9.4.178)

रुचिष्यमिष्टम् । भुजिष्यो दासः ।

### 3619: वसेस्तिः (9.4.179)

वस्तिर्नाभेरधो द्वयोः । वस्तयः स्युर्दशासूत्रे । बाहुलकात् शासः शास्तिः राजदण्डः । विन्ध्याख्यमगमस्यतीत्यगस्तिः । शकन्ध्वादिः ।

### 3620: सावसेः (9.4.180)

स्वस्ति । स्वरादिपाठादव्ययत्वम् ।

### 3621: वौ तसेः (9.4.181)

वितस्तिः ।

### 3622: पदिप्रथिभ्यां नित् (9.4.182)

पत्तिः । प्रथितिः ।

### 3623: तितुत्रेष्वग्रहादीनामितीट् दृणातेर्ह्रस्वश्च (9.4.183)

दृतिः ।

### 3624: कृतॄकृपिभ्यः कीटन् (9.4.184)

किरीटं शिरोवेष्टनम् । तिरीटं सुवर्णम् । कृपीटं कुक्षिवारिणोः ।

**उ625: रुचिवचिकुचिकुटिभ्यः कितच् (9.4.185)**

रुचितमिष्टम् । उचितम् । कुचितं परिमितम् ॥ कुटितं कुटिलम् ।

**उ626: कुटिकुषिभ्यां क्मलन् (9.4.186)**

कुड्मलम् । कुष्मलम् ।

**उ627: कुषेर्लश्च (9.4.187)**

कुल्मलं पापम् ।

**उ628: सर्वधातुभ्योऽसुन् (9.4.188)**

चेतः । सरः । पयः । सदः ।

**उ629: रपेरत एच्च (9.4.189)**

रेपोऽवद्यम् ।

**उ630: अशेर्देवने युट् च (9.4.190)**

देवने स्तुतौ । यशः ।

**उ631: उब्जेर्बले बलोपश्च (9.4.191)**

ओजः ।

**उ632: श्वेः सम्प्रसारणं च (9.4.192)**

शवः । शवसी । बालपर्यायोऽयम् ।

**उ633: श्रयतेः स्वाङ्गे शिरः किच्च (9.4.193)**

श्रयतेः शिरआदेशोऽसुन् किच्च । शिरः । शिरसी ।

**उ634: अर्तेरुच्च (9.4.194)**

उरः ।

**उ635: व्याधौ शुट् (9.4.195)**

अर्शो गुदव्याधिः ।

**उ636: उदके नुट् च (9.4.196)**

अर्तेरसुन् स्यात्तस्य च नुट् । अर्णः । अर्णसी ।

**उ637: इण आगसि (9.4.197)**

एनः ।

**उ638: रिचेर्धने घिच्च (9.4.198)**

चात्प्रत्ययस्य नुट् । घित्त्वात्कुत्वम् । रेक्णः सुवर्णम् ।

**3639: चायतेरन्ने ह्रस्वश्च (9.4.199)**

चनो भक्तम् ।

**3640: वृङ्शीङ्भ्यां रूपस्वाङ्गयोः पुट् च (9.4.200)**

वर्पो रूपम् । शेपो गुह्यम् ।

**3641: स्रुरीभ्यां तुट् च (9.4.201)**

स्रोतः । रेतः ।

**3642: पातेर्बले जुट् च (9.4.202)**

पाजः । पाजसी ।

**3643: उदके थुट् च (9.4.203)**

पाथः ।

**3644: अन्ने च (9.4.204)**

पाथो भक्तम् ।

**3645: अदेर्नुम् धौ च (9.4.205)**

अदेर्भक्ते वाच्येऽसुन् नुमागमो धादेशश्च । अन्धोऽन्नम् ।

**3646: स्कन्देश्च स्वाङ्गे (9.4.206)**

स्कन्दः । स्कन्दसी ।

**3647: आपः कर्माख्यायाम् (9.4.207)**

कर्माख्यायां ह्रस्वो नुट् च वा । अप्नः । अपः । बाहुलकात् । आपः । आपसी ।

**3648: रूपे जुट् च (9.4.208)**

अब्जो रूपम् ।

**3649: उदके नुम्भौ च (9.4.209)**

अम्भः ।

**3650: नहेर्दिवि भश्च (9.4.210)**

नभः ।

**3651: इण आग अपराधे च (9.4.211)**

आगः पापापराधयोः ।

### ३652: अमेर्हुक्च (9.4.212)

अंहः ।

### ३653: रमेश्च (9.4.213)

रंहः ।

### ३654: देशे ह च (9.4.214)

रमन्तेऽस्मिन् रहः ।

### ३655: अञ्च्यञ्जियुजिभृजिभ्यः कुश्च (9.4.215)

एभ्योऽसुन् कवर्गश्चान्तादेशः । अङ्कश्चिह्नशरीरयोः । अङ्गः पक्षी । योगः समाधिः । भर्गस्तेजः ।

### ३656: भूरञ्जिभ्यां कित् (9.4.216)

भुवः । रजः ।

### ३657: वसेर्णित् (9.4.217)

वासो वस्त्रम् ।

### ३658: चन्देरादेश्च छः (9.4.218)

छन्दः ।

### ३659: पचिवचिभ्यां सुट् च (9.4.219)

पक्षसी तु स्मृतौ पक्षौ । वक्षो हृदयम् ।

### ३660: वहिहाधाञ्भ्यश्छन्दसि (9.4.220)

वक्षाः अनड्वान् । हासाश्चन्द्रः । धासाः पर्वत इति प्राञ्चः । वस्तुतस्तु णिदित्यनुवर्तते न तु सुट् । तेन वहेरुपधावृद्धिः । इतरयोः आतो युक्– [2761] इति युक् । शोणा धृष्णू नृवाहसा । श्रोता हवं गृणतः स्तोमवाहाः । विश्वो विहायाः । वाजम्भरो विहायाः । देवो न यः पृथिवीं विश्वधायाः । अधारयत् पृथिवीं विश्वधायसम् । धर्णसिं भूरिधायसमित्यादिः ।

### ३661: इण आसिः (9.4.221)

अयाः वह्निः । स्वरादिपाठादव्ययत्वम् ।

### ३662: मिथुनेऽसिः पूर्ववच्च सर्वम् (9.4.222)

उपसर्गविशिष्टो धातुर्मिथुनं तन्नासुनोऽपवादोऽसिः । स्वरार्थः ।

### ३663: नञि हन एह च (9.4.223)

अनेहाः । अनेहसौ ।

**3664: विधाञो वेध च (9.4.224)**

विदधातीति वेधाः ।

**3665: नुवो धुट् च (9.4.225)**

नोधाः ।

**3666: गतिकारकोपपदयोः पूर्वपदप्रकृतिस्वरत्वं च (9.4.226)**

असिः स्यात् । सुतपाः । जातवेदाः । गतिकारकोपदात् कृत् 3873 इत्युत्तरपदप्रकृतिस्वरत्वे सति शेषस्यानुदात्तत्वे प्राप्ते तदपवादार्थमिदम् ।

**3667: चन्द्रे मो डित् (9.4.227)**

चन्द्रोपपदान्माङोऽसिः स्यात्स च डित् । चन्द्रमाः ।

**3668: वयसि धाञः (9.4.228)**

वयोधास्तरुणः ।

**3669: पयसि च (9.4.229)**

पयोधाः समुद्रो मेघश्च ।

**3670: पुरसि च (9.4.230)**

पुरोधाः ।

**3671: पुरूरवाः (9.4.231)**

पुरुशब्दस्य दीर्घो रौतेरसिश्च निपात्यते ।

**3672: चक्षेर्बहुलं शिच्च (9.4.232)**

नृचक्षाः ।

**3673: उषः कित् (9.4.233)**

उषः ।

**3674: दमेरुनसिः (9.4.234)**

सप्तार्चिर्दमुनाः ।

**3675: अङ्गतेरसिरि रुडागमश्च (9.4.235)**

अङ्गिराः ।

**3676: सर्तेरप्पूर्वादसिः (9.4.236)**

अप्सराः । प्रायेणायं भूम्नि । अप्सरसः ।

**3677: विदिभुजिभ्यां विश्वे (9.4.237)**

विश्ववेदाः । विश्वभोजाः ।

**3678: वशेः कनसिः (9.4.238)**

सम्प्रसारणम् । उशनाः ।

**3679: अदि भुवो डुतच् (9.5.1)**

अद्भुतम् ।

**3680: गुधेरूमः (9.5.2)**

गोधूमः ।

**3681: मसेरूरन् (9.5.3)**

मसूरः । प्रथमे पादे असेरुरन्मसेश्चेत्यत्र व्याख्यातः ।

**3682: स्थः किच्च (9.5.4)**

स्थूरो मनुष्यः ।

**3683: पातेरतिः (9.5.5)**

पातिः स्वामी । संपातिः पक्षिराजः ।

**3684: वातेर्नित् (9.5.6)**

वातिरादित्यसोमयोः ।

**3685: अर्तेश्च (9.5.7)**

अरतिरुद्वेगः ।

**3686: तृहेः क्नो हलोपश्च (9.5.8)**

तृणम् ।

**3687: वुञ्लुठितनिताडिभ्य उलच् तण्डश्च (9.5.9)**

व्रियन्ते लुट्यन्ते तन्यन्ते ताड्यन्त इति वा तण्डुलाः ।

**3688: दंसेष्टटनौ न आ च (9.5.10)**

दासः सेवकशूद्रयोः ।

**3689: दंशेश्च (9.5.11)**

दाशो धीवरः ।

**3690: उदि चेर्डसिः (9.5.12)**

स्वरादिपाठादव्ययत्वम् । उच्चैः ।

**उ691: नौ दीर्घश्च (9.5.13)**

नीचैः ।

**उ692: सौ रमेः क्तो दमे पूर्वपदस्य च दीर्घः (9.5.14)**

रमेः सुपूर्वाद्दमे वाच्ये क्तः स्यात् । कित्वादनुनासिकलोपः । सूरत उपशान्तो दयालुश्च ।

**उ693: पूञो यण् णुक् ह्रस्वश्च (9.5.15)**

यत्प्रत्ययः । पुण्यम् ।

**उ694: स्रंसेः शिः कुट् किश्च (9.5.16)**

स्रंसतेः शिरादेशः यत्प्रत्ययः कित्तस्य कुडागमश्च । शिक्यम् ।

**उ695: अर्तेः क्युरुच्च (9.5.17)**

उरणो मेषः ।

**उ696: हिंसेरीरन्नीरचौ (9.5.18)**

हिंसीरो व्याघ्रदुष्टयोः ।

**उ697: उदि दृणातेरजलौ पूर्वपदान्त्यलोपश्च (9.5.19)**

उदरम् ।

**उ698: डित् खनेर्मुट् स चोदात्तः (9.5.20)**

अच् अल् च डित्स्याद्धातोर्मुट् स चोदात्तः । मुखम् ।

**उ699: अमेः सन् (9.5.21)**

अंसः ।

**उ700: मुहेः खो मूर्च (9.5.22)**

मूर्खः ।

**उ701: नहेर्हलोपश्च (9.5.23)**

नखः ।

**उ702: शीङो ह्रस्वश्च (9.5.24)**

शिखा ।

**उ703: माङ ऊखो मय् च (9.5.25)**

मयूखः ।

**उ704: कलिगलिभ्यां फगस्योच्च (9.5.26)**

कुल्फः शरीरावयवो रोगश्च । गुल्फः पादग्रन्थिः ।

**उ705: स्पृशेः श्वण्शुनौ पृ च (9.5.27)**

श्वण्शुनौ प्रत्ययौ पृ इत्यादेशः । पार्श्वोऽस्त्री कक्षयोरधः । पर्शुरायुधम् ।

**उ706: श्मनि श्रयतेर्डुन् (9.5.28)**

श्मन्शब्दो मुखवाची । मुखमाश्रयत इति श्मश्रुः ।

**उ707: अश्वादयश्च (9.5.29)**

अश्रु नयनजलम् ।

**उ708: जनेष्टन् लोपश्च (9.5.30)**

जटा ।

**उ709: अच् तस्य जङ्घ च (9.5.31)**

तस्य जनेः जङ्घादेशः स्यादच्च । जङ्घा ।

**उ710: हन्तेः शरीरावयवे द्वे च (9.5.32)**

जघनम् । पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः ।

**उ711: क्लिशेरन् लो लोपश्च (9.5.33)**

लकारस्य लोपः । केशः ।

**उ712: फलेरितजादेश्च पः (9.5.34)**

पलितम् ।

**उ713: कृञादिभ्यः संज्ञायाम् वुन् (9.5.35)**

करकः । करका । कटकः । नरकम् । नरकः । नरको नारकोऽपि चेति द्विरूपकोशः । सरकं गगनम् । कोरकः कोरकं च ।

**उ714: चीकयतेराद्यन्तविपर्ययश्च (9.5.36)**

कीचको वंशभेदः ।

**उ715: पचिमच्योरिच्चोपधायाः (9.5.37)**

पेचकः । मेचकः ।

**उ716: जनेररष्ठ च (9.5.38)**

जठरम् ।

**उ3717: वचिमनिभ्यां चिच्च (9.5.39)**

वठरो मूर्खः । मठरो मुनिशौण्डयोः । बिदादित्वान्माठरः । गर्गादित्वान्माठर्यः ।

**उ3718: ऊर्जि दृणातेरलचौ पूर्वपदान्तलोपश्च (9.5.40)**

ऊर्दरः शूररक्षसोः ।

**उ3719: कृदरादयश्च (9.5.41)**

कृदरः । कुसूलः । मृदरं विलसत् । सृदरः सर्पः ।

**उ3720: हन्तेर्युन्नाद्यन्तयोर्घत्वतत्वे (9.5.42)**

घातनो मारकः ।

**उ3721: क्रमिगमिक्षमिभ्यस्तुन् वृद्धिश्च (9.5.43)**

क्रान्तुः पक्षी । गान्तुः पथिकः । क्षान्तुर्मशकः ।

**उ3722: हर्यतेः कन्यन् हिर च (9.5.44)**

कन्यन् प्रत्ययः । हिरण्यम् ।

**उ3723: कृञः पासः (9.5.45)**

कर्पासः । बिल्वादित्वात्कार्पासं वस्त्रम् ।

**उ3724: जनेस्तु रश्च (9.5.46)**

जर्तुर्हस्ती योनिश्च ।

**उ3725: ऊर्णोतेर्डः (9.5.47)**

ऊर्णा ।

**उ3726: दधातेर्यत् नुट् च (9.5.48)**

धान्यम् ।

**उ3727: जीर्यतेः क्रिन् रश्च वः (9.5.49)**

जिव्रिः स्यात्कलपक्षिणोः । बहुलकात् हलि च [354] इति दीर्घो न ।

**उ3728: मव्यतेर्यलोपो मश्चापतुट् चालः (9.5.50)**

मव्यतेरालप्रत्ययः स्यात्तस्यापतुडागमो धातोर्यलोपो मकारश्चान्त्यस्य । ममापतालो विषये ।

**उ3729: ऋजेः कीकन् (9.5.51)**

ऋजीक इन्द्रो धूमश्च ।

**उ3730: तनोतेर्डउः सन्वच्च (9.5.52)**

तितउः । पुंसि क्लीबे ।

**उ731: अर्भकपृथुकपाका वयसि (9.5.53)**

ऋधु वृद्धो । अतो वुन् । भकारश्चान्तादेशः । प्रथेः कुकन्संप्रसारणं च । पिबतेः कन् ।

**उ732: अवद्यावमाधमार्वरेफाः (9.5.54)**

कुत्सिते वदेर्नञि यत् । अवद्यम् । अवतेरमः । वस्य पक्षे धः । अवमः । अधमः । अर्तेर्वन् । अर्वा । रिफतेस्तौदादिकादेः । रेफः ।

**उ733: लीरीङोर्ह्रस्वः पुट् च तरौ श्लेषणकुत्सनयोः (9.5.55)**

तरौ प्रत्ययौ क्रमात् स्तो धातोर्ह्रस्वः प्रत्ययस्य पुट् । लिप्तं श्लिष्टम् । रिप्रं कुत्सितम् ।

**उ734: क्लिशेरीच्चोपधायाः कन् लोपश्च लो नाम् च (9.5.56)**

क्लिशेः कन् स्यात् उपाधाया ईत्वं लस्य लोपो नामागमश्च । कीनाशो यमः । कित्वफलं चिन्त्यम् ।

**उ735: अश्नोतेराशुकर्मणि वरट् च (9.5.57)**

चकारादुपधाया ईत्वम् । ईश्वरः ।

**उ736: चतेरुरन् (9.5.58)**

चत्वारः ।

**उ737: प्रादतेररन् (9.5.59)**

प्रातः ।

**उ738: अमेस्तुट् च (9.5.60)**

अन्तर्मध्यम् ।

**उ739: दहेर्गो लोपो दश्च नः (9.5.61)**

गप्रत्ययो धातोरन्तस्य लोपो दकारस्य नकारः । नगः ।

**उ740: सिचेः संज्ञायां हनुमौ कश्च (9.5.62)**

सिञ्चतेः कप्रत्ययो हकारादेशो नुम् च स्यात् । सिंहः ।

**उ741: व्याङि घ्रातेश्च जातौ (9.5.63)**

कप्रत्ययः स्यात् । व्याघ्रः ।

**उ742: हन्तेरच् घुर च (9.5.64)**

घोरम् ।

**३७४३: क्षमेरुपधालोपश्च (9.5.65)**

चादच् । क्ष्मा ।

**३७४४: तरतेर्ड्रिः (9.5.66)**

त्रयः । त्रीन् ।

**३७४५: ग्रहेरनिः (9.5.67)**

ग्रहणिः ङीष् । ग्रहणी व्याधिभेदः ।

**३७४६: प्रथेरमच् (9.5.68)**

प्रथमः ।

**३७४७: चरेश्च (9.5.69)**

चरमः ।

**३७४८: मङ्गेरलच् (9.5.70)**

मङ्गलम् ।

*। इति उणादिप्रकरणम् ।*

## ॥ अथ उत्तरकृदन्तप्रकरणम् ॥

**3169: उणादयो बहुलम् (3.3.1)**

एते वर्तमाने सञ्ज्ञायां च बहुलं स्युः । केचिदविहिता अप्यूह्याः ॥ सञ्ज्ञासु धातुरूपाणि प्रत्ययाश्चयाश्च ततः परे । कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥

**3170: भूतेऽपि दृश्यन्ते (3.3.2)**

**3171: भविष्यति गम्यादयः (3.3.3)**

**3172: दाशगोघ्नौ संप्रदाने (3.4.73)**

एतौ सम्प्रदानकारके निपात्येते । दशन्ति तस्मै दाशः । गां हन्ति तस्मै गोघ्नोऽतिथिः ॥

**3173: भीमादयोऽपादाने (3.4.74)**

भीमः । भीष्मः । प्रस्कन्दनः । प्ररक्षः । मूर्खः । खलतिः ॥

**3174: ताभ्यामन्यत्रोणादयः (3.4.75)**

सम्प्रदानपरामर्शार्थं ताभ्यामिति । ततोऽसौ भवति तन्तुः । वृत्तं तदिति वर्त्म । चरितं तदिति चर्म ॥

## 3175: तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् (3.3.10)

क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोरेतौ स्तः । मान्तत्वादव्ययत्वम् । कृष्णं द्रष्टुं याति । कृष्णं दर्शको याति । अत्र वासरूपेण तृजादयो न । पुनर्ण्वुलुक्तेः ॥

## 3176: समानकर्तृकेषु तुमुन् (3.3.158)

अक्रियार्थोपपदार्थमेतत् । इच्छार्थेष्वेककर्तृकेषूपपदेषु धातोस्तुमुन् स्यात् । इच्छति भोक्तुम् । वष्टि वाञ्छति वा ॥

## 3177: शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् (3.4.65)

एषूपपदेषु धातोस्तुमुन् स्यात् । शक्नोति भोक्तुम् । एवं धृष्णोतीत्यादौ । अर्थग्रहणमस्तिनैव सम्बध्यते । अनन्तरत्वात् । अस्ति भवति विद्यते वा भोक्तुम् ॥

## 3178: पर्याप्तिवचनेष्वलमर्थेषु (3.4.66)

पर्याप्तिः पूर्णता । तद्वाचिषु सामर्थ्यवचनेषूपपदेषु तुमुन् स्यात् । पर्याप्तो भोक्तुं प्रवीणः कुशलः पटुरित्यादि । पर्याप्तिवचनेषु किम् । अलं भुक्त्वा । अलमर्थेषु किम् । पर्याप्तं भुङ्क्ते । प्रभूततेह गम्यते न तु भोक्तुः सामर्थ्यम् ॥

## 3179: कालसमयवेलासु तुमुन् (3.3.167)

पर्यायोपादानमर्थोपलक्षणार्थम् । कालार्थेषूपपदेषु तुमुन् स्यात् । कालः समयो वेला अनेहा वा भोक्तुम् । प्रैषादिग्रहणमिहानुवर्तते । तेनेह न । भूतानि कालः पचतीति वार्ता ॥

## 3180: भाववचनाश्च (3.3.11)

भाव इत्यधिकृत्य वक्ष्यमाणा घञादयः क्रियार्थायां क्रियायां भविष्यति स्युः । यागाय याति ॥

## 3181: अण् कर्मणि च (3.3.12)

कर्मण्युपपदे क्रियार्थायां क्रियायां चाण् स्यात् । ण्वुलोऽपवादः । काण्डलावो व्रजति । परत्वादयं कादीन् बाधते । कम्बलदायो व्रजति ॥

## 3182: पदरुजविशस्पृशो घञ् (3.3.16)

भविष्यतीति निवृत्तम् । पद्यतेऽसौ पादः । रुजतीति रोगः । विशतीति वेशः । स्पृशतीति स्पर्शः ॥

## 3183: सृ स्थिरे (3.3.17)

सृ इति लुप्तविभक्तिकम् । सर्तेः स्थिरे कर्तरि घञ् स्यात् । सरति कालान्तरमिति सारः ॥ ***व्याधिमत्स्यबलेषु चेति वाच्यम्*** (वा) ॥ अतीसारो व्याधिः । अन्तर्भावितण्यर्थोऽत्रसरतिः । रुधिराधिकमतिशयेन सारयतीत्यर्थः । विसारो मत्स्यः । सारो बले स्थिरांशे च ॥

## 3184: भावे (3.3.18)

सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ् स्यात् । पाकः । पाकौ ॥

## 3185: स्फुरतिस्फुलत्योर्घञि (6.1.47)

अनयोरेच आत्वं स्याद्घञि । स्फारः । स्फालः । उपसर्गस्य घञि-[1044] इति दीर्घः । परीहारः । इकः काशे [1045] काशे उत्तरपदे इगन्तस्यैव प्रादेर्दीर्घः । नीकाशः । अनूकाशः । इकः किम् । प्रकाशः ।नोदात्तोपदेश [2763] इति न वृद्धिः । शमः । आचमादेस्तु । आचामः । कामः । वामः । विश्राम इति त्वपाणिनीयम् ॥

## 3186: स्यदो जवे (6.4.28)

स्यन्देर्घञि नलोपो वृद्ध्यभावश्च निपात्यते । स्यदो वेगः । अन्यत्र स्यन्दः ॥

## 3187: घञि च भावकरणयोः (6.4.27)

रञ्जेर्नलोपः स्यात् । रागः । अनयोः किम् । रजत्यस्मिन् रङ्गः । प्रास्यते इति प्रासः । सञ्ज्ञायामिति प्रायिकम् । को भवता लाभो लब्धः । इत उत्तरं भावे अकर्तरि च कारके-[3188] इति कृत्यल्युटो बहुलं-[2841] इति यावत् द्वयमप्यनुवर्तते ॥

## 3188: अकर्तरि च कारके संज्ञायाम् (3.3.19)

कर्तृभिन्ने कारके घञ् स्यात् ॥

## 3189: अवोदैधौद्मप्रश्रथहिमश्रथाः (6.4.29)

अवोदः अवक्लेदनम् । एध इन्धनम् । ओद्म उन्दनम् । श्रन्थेर्नलोपो वृद्ध्यभावश्च ॥

## 3190: परिमाणाख्यायां सर्वेभ्यः (3.3.20)

घञ् । अजपोर्बाधनार्थमिदम् । एकस्तण्डुलनिचायः । द्वौ शूर्पनिष्पावौ । द्वौ कारौ ॥ ***दारजारौ कर्तरि णिलुक्च*** (वा) ॥ दारयन्तीति दाराः । जरयन्तीति जाराः ॥

## 3191: इङश्च (3.3.21)

घञ् । अचोऽपवादः । उपेत्य अस्मादधीयते उपाध्यायः ॥ ***अपादाने स्त्रियामुपसङ्ख्यानं तदन्ताच्च वा ङीष्*** (वा) ॥ उपाध्याया । उपाध्यायी ॥ ***शॄ वायुवर्णनिवृतेषु*** (वा) ॥ शॄ इत्यविभक्तिको निर्देशः । शारो वायुः । करणे घञ् । शारो वर्णः । चित्रीकरणमिह धात्वर्थः । निव्रियते आव्रियतेऽनेनेति निवृतमावरणम् । बाहुलकात्करणे क्तः । गौरिवाकृतनीशारः प्रायेण शिशिरे कृशः । अकृतप्रावरण इत्यर्थः ॥

## 3192: उपसर्गे रुवः (3.3.22)

घञ् । संरावः । उपसर्गे किम् । रवः ॥

## 3193: अभिनिसः स्तनः शब्दसंज्ञायाम् (8.3.86)

अस्मात् स्तनेः सस्य मूर्धन्यः । अभिनिष्टानो वर्णः । शब्दसञ्ज्ञायां किम् । अभिनिःस्तनति मृदङ्गः ॥

### 3194: समि युद्रुदुवः (3.3.23)

संयूयते मिश्रीक्रियते गुडादिभिरिति संयावः । पिष्टविकारोऽपूपविशेषः । सन्द्रावः । सन्दावः ॥

### 3195: श्रिणीभुवोऽनुपसर्गे (3.3.24)

श्रायः । नायः । भावः । अनुपसर्गे किम् । प्रश्रयः । प्रणयः । प्रभवः । कथं प्रभावो राज्ञ इति । प्रकृष्टो भाव इति प्रादिसमासः । कथं राज्ञो नय इति । बाहुलकात् ॥

### 3196: वौ क्षुश्रुवः (3.3.25)

विक्षावः । विश्रावः । वौ किम् । क्षवः । श्रवः ॥

### 3197: अवोदोर्नियः (3.3.26)

अवनायः अधो नयनम् । उन्नायः ऊर्ध्वनयनम् । कथमुन्नयः उत्प्रेक्षेति । बाहुलकात् ॥

### 3198: प्रे द्रुस्तुस्रुवः (3.3.27)

प्रद्रावः । प्रस्तावः । प्रस्रावः । प्रे इति किम् । द्रवः । स्तवः । स्रवः ॥

### 3199: निरभ्योः पूल्वोः (3.3.28)

निष्पूयते शूर्पादिभिरिति निष्पावो धान्यविशेषः । अभिलाषः । निरभ्योः किम् । पवः । लवः ॥

### 3200: उन्न्योर्ग्रः (3.3.29)

उद्गारः । निगारः । उन्न्योः किम् । गरः ॥

### 3201: कॄ धान्ये (3.3.30)

कॄ इत्यस्माद्धान्यविषयादुन्न्योर्घञ् स्यात् । उत्कारो निकारो धान्यस्य । विक्षेप इत्यर्थः । धान्ये किम् । भिक्षोत्करः । पुष्पनिकरः ॥

### 3202: यज्ञे समि स्तुवः (3.3.31)

समेत्य स्तुवन्ति यस्मिन् देशे छन्दोगाः स देशः संस्तावः । यज्ञे किम् । संस्तवः परिचयः ॥

### 3203: प्रे स्त्रोऽयज्ञे (3.3.32)

अयज्ञे इति छेदः यज्ञे इति प्रकृतत्वात् । प्रस्तारः । अयज्ञे किम् । बर्हिषः प्रस्तरो मुष्टिविशेषः ॥

### 3204: प्रथने वावशब्दे (3.3.33)

विपूर्वात् स्तृणातेर्घञ् स्यादशब्दविषये प्रथने । पटस्य विस्तारः । प्रथने किम् । तृणविस्तरः । अशब्दे किम् । ग्रन्थविस्तरः ॥

## 3205: छन्दोनाम्नि च (3.3.34)

स्त्र इत्यनुवर्तते । विष्टारपङ्क्तिश्छन्दः । विस्तीर्यन्तेऽस्मिन्नक्षराणीत्यधिकरणे घञ् । ततः कर्मधारयः ॥

## 3206: छन्दोनाम्नि च (8.3.94)

विपूर्वात्स्तृणातेर्घञन्तस्य सस्य षत्वं स्याच्छन्दोनाम्नि । इति षत्वम् ॥

## 3207: उदि ग्रहः (3.3.35)

उद्ग्राहः ॥

## 3208: समि मुष्टौ (3.3.36)

मल्लस्य सङ्ग्राहः । मुष्टौ किम् । द्रव्यस्य सङ्ग्रहः ॥

## 3209: परिन्योर्नीणोर्द्यूताभ्रेषयोः (3.3.37)

परिपूर्वान्नयतेर्निपूर्वादिणश्च घञ् स्यात् क्रमेण द्यूतेऽभ्रेषे च विषये । परिणायेन शारान् हन्ति । समन्तान्नयनेनेत्यर्थः । एषोऽत्र न्यायः । उचितमित्यर्थः । द्यूताभ्रेषयोः किम् । परिणयो विवाहः । न्ययो नाशः ॥

## 3210: परावनुपात्यय इणः (3.3.38)

क्रमप्राप्तस्य अनतिपातोऽनुपात्ययः । तव पर्यायः । अनुपात्यये किम् । कालस्य पर्ययः । अतिपात इत्यर्थः ॥

## 3211: व्युपयोः शेतेः पर्याये (3.3.39)

तव विशायः । तव राजोपशायः । पर्याये किम् । विशयः संशयः । उपशयः समीपशयनम् ॥

## 3212: हस्तादाने चेरस्तेये (3.3.40)

हस्तादान इत्यनेन प्रत्यासत्तिरादेयस्य लक्ष्यते । पुष्पप्रचायः । हस्तादाने किम् । वृक्षाग्रस्थानां फलानां यष्ट्या प्रचयं करोति । अस्तेये किम् । पुष्पप्रचयश्चौर्येण ॥

## 3213: निवासचितिशरीरोपसमाधानेष्वादेश्च कः (3.3.41)

एषु चिनोतेर्घञ् आदेश्च ककारः । उपसमाधानं राशीकरणं तच्च धात्वर्थः । अन्ये प्रत्ययार्थस्य कारकस्योपाधिभूताः । निवासे । काशीनिकायः । चितौ । आकायमग्निं चिन्वीत । शरीरे । चीयतेऽस्मिन्नस्थ्यादिकमिति कायः । समूहे । गोमयनिकायः । एषु किम् । चयः । चः क इति

वक्तव्ये आदेरित्युक्तिर्यङ्लुक्यादेरेव यथा स्यादिति । गोमयानां निकेचायः । पुनः पुना राशीकरणमित्यर्थः ॥

## 3214: संघे चानौत्तराधर्ये (3.3.42)

चेर्घञ् आदेश्च कः । भिक्षुनिकायः । प्राणिनां समूहः सङ्घः । अनौत्तराधर्ये किम् । सूकरनिचयः । सङ्घे किम् । ज्ञानकर्मसमुच्चयः ॥

## 3215: कर्मव्यतिहारे णच् स्त्रियाम् (3.3.43)

स्त्रीलिङ्गे भावे णच् ॥

## 3216: णचः स्त्रियामञ् (5.4.14)

## 3217: न कर्मव्यतिहारे (7.3.6)

अत्र ऐच् न स्यात् । व्यावक्रोशी । व्यावहासी ॥

## 3218: अभिविधौ भाव इनुण् (3.3.44)

## 3219: अणिनुणः (5.4.15)

इनण्यनपत्ये [1245] । सांराविणं वर्तते ॥

## 3220: आक्रोशेऽवन्योर्ग्रहः (3.3.45)

अव नि एतयोर्ग्रहेर्घञ् स्यात् शापे । अवग्राहस्ते भूयात् । अभिभव इत्यर्थः । निग्राहस्ते भूयात् । बाध इत्यर्थः । आक्रोशे किम् । अवग्रहः पदस्य । निग्रहश्चोरस्य ॥

## 3221: प्रे लिप्सायाम् (3.3.46)

पात्रप्रग्राहेण चरति भिक्षुः ॥

## 3222: परौ यज्ञे (3.3.47)

उत्तरः परिग्राहः । स्फ्येन वेदेः स्वीकरणम् ॥

## 3223: नौ वृ धान्ये (3.3.48)

वृ इति लुप्त पञ्चमीकम् । नीवाराः । धान्ये किम् । निवरा कन्या । क्तिन्विषयेऽपि बाहुलकादप् । प्रवरा सेतिवत् ॥

## 3224: उदि श्रयतियौतिपूद्रुवः (3.3.49)

उच्छ्रायः । उद्यावः । उत्पावः । उद्रावः । कथं पतनान्ताः समुच्छ्रया इति । बाहुलकात् ॥

## 3225: विभाषाऽऽङि रुप्लुवोः (3.3.50)

आरावः । आरवः । आप्लावः । आप्लवः ॥

## 3226: अवे ग्रहो वर्षप्रतिबन्धे (3.3.51)

विभाषेति वर्तते । अवग्रहः । अवग्राहः । वर्षप्रतिबन्धे किम् । अवग्रहः पदस्य ॥

## 3227: प्रे वणिजाम् (3.3.52)

प्रे ग्रहेर्घञ् वा वणिजां सम्बन्धी चेत्प्रत्ययार्थः । तुलासूत्रमिति यावत् । तुलाप्रग्राहेण चरति । तुलाप्रग्रहेण वा ॥

## 3228: रश्मौ च (3.3.53)

प्रग्रहः । प्रग्राहः ॥

## 3229: वृणोतेराच्छादने (3.3.54)

विभाषा प्र इत्येव । प्रावारः । प्रवरः ॥

## 3230: परौ भुवोऽवज्ञाने (3.3.55)

परिभावः । परिभवः । अवज्ञाने किम् । सर्वतो भवनं परिभवः ॥

## 3231: एरच् (3.3.56)

चयः । जयः ॥ ***भयादीनामुपसङ्ख्यानम्, नंपुसके क्तादिनिवृत्त्यर्थम्*** (वा) ॥ भयम् । वर्षम् ॥

## 3232: ऋदोरप् (3.3.57)

ऋवर्णान्तादुवर्णान्तादप् । करः । गरः । शरः । यवः । लवः । स्तवः । पवः ॥

## 3233: वृक्षासनयोर्विष्टरः (8.3.93)

अनयोर्विपूर्वस्य स्त्रः षत्वं निपात्यते । विष्टरो वृक्ष आसनं च । वृक्षे किम् । वाक्यस्य विस्तरः ॥

## 3234: ग्रहवृदृनिश्चिगमश्च (3.3.58)

अप् स्यात् । घञचोरपवादः । ग्रहः । वरः । दरः । निश्चयः । गमः ॥ ***वशिरण्योरुपसङ्ख्यानम्*** (वा) ॥ वशः । रणः ॥ ***घञर्थे कविधानम्*** (वा) ॥ प्रस्थः । विघ्नः ॥ ***द्वित्वप्रकरणे के कृञादीनामिति वक्तव्यम्*** (वा) ॥ चक्रम् । चिक्लिदम् । चक्नसः ॥

## 3235: उपसर्गेऽदः (3.3.59)

अप् स्यात् ॥

## 3236: घञपोश्च (2.4.38)

अदेर्घसॣ स्यात् घञि अपि च । प्रघसः । विघसः । उपसर्गे किम् । घासः ॥

## 3237: नौ ण च (3.3.60)

नौ उपपदे अदेर्णः स्यादप् च । न्यादः । निघसः ॥

## 3238: व्यधजपोरनुपसर्गे (3.3.61)

अप् स्यात् । व्यधः । जपः । उपसर्गे तु । आव्याधः । उपजापः ॥

## 3239: स्वनहसोर्वा (3.3.62)

अप् । पक्षे घञ् । स्वनः । स्वानः । हसः । हासः । अनुपसर्गे इत्येव । प्रस्वानः । प्रहासः ॥

## 3240: यमः समुपनिविषु च (3.3.63)

एषु अनुपसर्गे च यमेरप् वा । संयमः । संयामः । उपयमः । उपयामः । नियमः । नियामः । वियमः । वियामः । यमः । यामः ॥

## 3241: नौ गदनदपठस्वनः (3.3.64)

अप् वा स्यात् । निगदः । निगादः । निनदः । निनादः । निपठः । निपाठः । निस्वनः । निस्वानः ॥

## 3242: क्वणो वीणायां च (3.3.65)

नावनुपसर्गे च वीणाविषयाच्च क्वणतेरप् वा स्यात् । वीणाग्रहणं प्राद्यर्थम् । निक्वणः । निक्वाणः । क्वणः । क्वाणः । वीणायां तु । प्रक्वणः । प्रक्वाणः ॥

## 3243: नित्यं पणः परिमाणे (3.3.66)

अप् स्यात् । मूलकपणः । शाखपणः । व्यवहारार्थं मूलकादीनां परिमितो मुष्टिर्बध्यते सोऽस्य विषयः । परिमाणे किम् । पाणः ॥

## 3244: मदोऽनुपसर्गे (3.3.67)

धनमदः । उपसर्गे तु । उन्मादः ॥

## 3245: प्रमदसंमदौ हर्षे (3.3.68)

हर्षे किम् । प्रमादः । संमादः ॥

## 3246: समुदोरजः पशुषु (3.3.69)

संपूर्वोऽजिः समुदाये उत्पूर्वश्च प्रेरणे तस्मात्पशुविषयकादप् स्यात् । अघञपोरित्युक्तेर्वीभावो न । समजः पशूनां सङ्घः । उदजः पशूनां प्रेरणम् । पशुषु किम् । समाजो ब्राह्मणानाम् । उदजः क्षत्रियाणाम् ॥

## 3247: अक्षेषु ग्लहः (3.3.70)

अक्षशब्देन देवनं लक्ष्यते । तत्र यत्पणरूपेण ग्राह्यं तत्र ग्लह इति निपात्यते । अक्षस्य ग्लहः । व्यात्युक्षीमभिसरणग्लहामदीव्यन् । अक्षेषु किम् । पादस्य ग्रहः ॥

## 3248: प्रजने सर्तेः (3.3.71)

प्रजनं प्रथमगर्भग्रहणम् । गवामुपसरः । कथमवसरः प्रसर इति । अधिकरणे पुंसि सञ्ज्ञायां-3296 इति घः ॥

## 3249: ह्वः संप्रसारणं च न्यभ्युपविषु (3.3.72)

निहवः । अभिहवः । उपहवः । विहवः । एषु किम् । प्रह्वायः ॥

## 3250: आङि युद्धे (3.3.73)

आहूयन्तेऽस्मिन्नित्याहवः । युद्धे किम् । आह्वायः ।

## 3251: निपानमाहावः (3.3.74)

आङ्पूर्वस्य ह्वयतेः सम्प्रसारणमप् वृद्धिश्चोदकाधारश्चेद्वाच्यः । आहावस्तु निपानं स्यादुपकूपजलाशये ॥

## 3252: भावेऽनुपसर्गस्य (3.3.75)

अनुपसर्गस्य ह्वयतेः सम्प्रसारणमप् च स्यात् भावे । हवः ॥

## 3253: हनश्च वधः (3.3.76)

अनुपसर्गाद्धन्तेर्भावे अप् स्यात् वधादेशश्चान्तोदात्तः वधेन दस्युम् । चाद्धञ् । घातः ॥

## 3254: मूर्तौ घनः (3.3.77)

मूर्तिः काठिण्यं तस्मिन्नभिधेये हन्तेरप् स्यात् घनश्चादेशः । अभ्रघनः । कथं सैन्धवघनमानयेति । धर्मशब्देन धर्मी लक्ष्यते ॥

## 3255: अन्तर्घनो देशे (3.3.78)

वाहीकग्रामविशेषस्य सञ्ज्ञेयम् । अन्तर्घण इति पाठान्तरम् ॥

## 3256: अगारैकदेशे प्रघणः प्रघाणश्च (3.3.79)

द्वारदेशे द्वौ प्रकोष्ठावलिन्दौ आभ्यन्तरो बाह्यश्च । तत्र बाह्ये प्रकोष्ठे निपातनमिदम् । प्रविशद्भिर्जनैः पादैः प्रकर्षेण हन्यते इति प्रघणः । प्रघाणः । कर्मण्यप् । पक्षे वृद्धिः ॥

## 3257: उद्घनोऽत्याधनम् (3.3.80)

अत्याधानमुपरि स्थापनम् । यस्मिन् काष्ठे अन्यानि काष्ठानि स्थापयित्वा तक्ष्यन्ते तदुद्घनः । अधिकरणेऽप् ॥

## 3258: अपघनोऽङ्गम् (3.3.81)

अङ्गं शरीरावयवः । स चेह न सर्वः किन्तु पाणिः पादश्चेत्याहुः । करणेऽप् । अपघातोऽन्यः ॥

## 3259: करणेऽयोविद्रुषु (3.3.82)

एषु हन्तेः करणेऽप् स्याद्घनादेशश्च । अयो हन्यतेऽनेनेत्ययोघनः । विघनः । द्रुघनः । द्रुघण इत्येके । पूर्वपदात्सञ्ज्ञायां [857] इति णत्वम् । सञ्ज्ञैषा कुठारस्य । द्रुर्वृक्षः ॥

## 3260: स्तम्बे क च (3.3.83)

स्तम्बे उपपदे हन्तेः करणे कः स्यादप् च पक्षे घनादेशश्च । स्तम्बघ्नः । स्तम्बघनः । करण इत्येव । स्तम्बघातः ॥

## 3261: परौ घः (3.3.84)

परौ हन्तेरप् स्यात्करणे घशब्दश्चादेशः । परिहन्यतेऽनेनेति परिघः ॥

## 3262: परेश्च घाङ्कयोः (8.2.22)

परे रेफस्य लो वा स्याद्घशब्दे अङ्कशब्दे च । पलिघः । परिघः । पर्यङ्कः । पल्यङ्कः । इह तरप्तमपौ घः [2003] इति कृत्रिमस्य न ग्रहणं व्याख्यानात् ।

## 3263: उपघ्न आश्रये (3.3.85)

उपपूर्वाद्धन्तेरप् स्यादुपधालोपश्च । आश्रयशब्देन सामीप्यं लक्ष्यते । पर्वतेनोपहन्यते सामीप्येन गम्यते इति पर्वतोपघ्नः ।

## 3264: संघोद्घौ गणप्रशंसयोः (3.3.86)

संहननं सङ्घः । भावेऽप् । उद्धन्यते उत्कृष्टो ज्ञायते इत्युद्घः । कर्मण्यप् । गत्यर्थानां बुध्यर्थत्वाद्धन्तिर्ज्ञाने ।

## 3265: निघो निमितम् (3.3.87)

समन्तान्मितं निमितम् । निर्विशेषं हन्यते इति निघा वृक्षाः । समारोहपरिणाहा इत्यर्थः ।

## 3266: ड्वितः क्त्रिः (3.3.88)

अयं भाव एव स्वभावात् । क्त्रेर्मम्नित्यम् [1570] नित्यग्रहणात्क्त्रिर्मब्विषयः । अत एव क्यन्तेन विग्रहः । डुपचष् । पाकेन निर्वृत्तं पक्त्रिमम् । डुवप् उप्त्रिमम् ॥

## 3267: द्वितोऽथुच् (3.3.89)

अयमपि स्वभावाद् भाव एव । टुवेपृ । वेपथुः । श्वयथुः ॥

## 3268: यजयाचयतविच्छप्रच्छरक्षो नङ् (3.3.90)

यज्ञः । याच्ञा । यत्नः । विश्नः । प्रश्नः । प्रश्नेचासन्नकाले [2777] इति ज्ञापकान्न सम्प्रसारणम् । ङित्वं तु विश्न इत्यत्र गुणनिषेधाय । रक्ष्णः ॥

## 3269: स्वपो नन् (3.3.91)

स्वप्नः ॥

## 3270: उपसर्गे घोः किः (3.3.92)

प्रधिः । अन्तर्धिः । उपाधीयतेऽनेनेत्युपाधिः ॥

## 3271: कर्मण्यधिकरणे च (3.3.93)

कर्मण्युपपदे घोः किः स्यादधिकरणेऽर्थे । जलानि धीयन्तेऽस्मिन्निति जलधिः ॥

## 3272: स्त्रियां क्तिन् (3.3.94)

स्त्रीलिङ्गे भावादौ क्तिन् स्याद्घञोऽपवादः । अजपौ तु परत्वाद्बाधेते । कृतिः । चितिः । स्तुतिः । स्फायी । स्फातिः । स्फीतिकाम इति तु प्रामादिकम् । क्तान्ताद्धात्वर्थे णिचि अच इरिति वा समाधेयम् ॥ ***श्रुयजीषिस्तुभ्यः करणे*** (वा) ॥ श्रूयतेऽनया श्रुतिः । यजेरिषेश्च । इष्टिः । स्तुतिः ॥ ***ऋल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः*** (वा) ॥ तेन नत्वम् । कीर्णिः । गीर्णिः । लूनिः । धूनिः । पूनिः । ह्लादः [3073] इति योगविभागात् क्तिनि ह्रस्वः । प्रह्लन्निः । ति च [3037] चूर्तिः । फुलति ॥ ***चायतेः क्तिनि चिभावो वाच्यः*** (वा) ॥ अपचितिः ॥ ***सम्पदादिभ्यः क्विप्*** (वा) ॥ सम्पत् । विपत् ॥ क्तिन्नपीष्यते ॥ सम्पत्तिः । विपत्तिः ॥

## 3273: स्थागापापचो भावे (3.3.95)

क्तिन् स्यादङोऽपवादः । प्रस्थितिः । उपस्थितिः । सङ्गीतिः । सम्पीतिः । पक्तिः । कथमवस्था संस्थेति । व्यवस्थायामिति ज्ञापकात् ॥

## 3274: ऊतियूतिजूतिसातिहेतिकीर्तयश्च (3.3.97)

अवतेः ज्वरत्वर [2654] इत्यूठ । ऊतिः । स्वरार्थं वचनम् । उदात्त इति हि वर्तते । यूतिः । जूतिः । अनयोर्दीर्घत्वं च निपात्यते । स्यतेः सातिः । द्यतिस्यति [3074] इतीत्वे प्राप्ते इत्वाभावो निपात्यते । सनोतेर्वा जनसन [2504] इत्यात्वे कृते स्वरार्थं निपातनम् । हन्तेर्हिनोतेर्वा हेतिः । कीर्तिः ॥

## 3275: व्रजयजोर्भावे क्यप् (3.3.98)

व्रज्या । इज्या ॥

## 3276: संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः (3.3.99)

समजादिभ्यः स्त्रियां भावादौ क्यप्स्यात्स चोदात्तः सञ्ज्ञायाम् ॥ ***अजेः क्यपि वीभावो नेति वाच्यम्*** (वा) ॥ समजन्त्यस्यामिति समज्या सभा । निषीदन्त्यस्यामिति निषद्या आपणः । निपतन्त्यस्यामिति निपत्या पिच्छिला भूमिः । मन्यतेऽनयेति मन्या गलपार्श्वशिरा । विदन्त्यनया विद्या । सुत्या । अभिषवः । शय्या । भृत्या । ईयतेऽनया इत्या शिबिका ॥

## 3277: कृञः श च (3.3.100)

कृञ इति योगविभागः । कृञः क्यप्स्यात् । कृत्या ॥ श च ॥ चात् क्तिन् । क्रिया । कृतिः ॥

### 3278: इच्छा (3.3.101)

ईषेर्भावे शो यगभावश्च निपात्यते । इच्छा ॥ ***परिचर्यापरिसर्यामृगयाटाट्यानामुपसङ्ख्यानम्*** (वा) ॥ शो यक् च निपात्यते । परिचर्या पूजा । परिसर्या परिसरणम् । अत्र गुणोऽपि । शे यकि णिलोपः । मृगया । अटतेः शे यकि ट्यशब्दस्य द्वित्वं पूर्वभागे यकारनिवृत्तिर्दीर्घश्च । अटाट्या ॥ ***जागर्तेरकारो वा*** (वा) ॥ पक्षे शः । जागरा । जगर्या ॥

### 3279: अ प्रत्ययात् (3.3.102)

प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियामकारप्रत्ययः स्यात् । चिकीर्षा । पुत्रकाम्या ॥

### 3280: गुरोश्च हलः (3.3.103)

गुरुमतो हलन्तात् स्त्रियामकारः स्यात् । ईहा । ऊहा । गुरोः किम् । भक्तिः । हलः किम् । नीतिः ॥ ***निष्ठायां सेट इति वक्तव्यम्*** (वा) ॥ नेह । आप्तिः । तितुत्र-[3163] इति नेट् । दीप्तिः ॥ ***तितुत्रेष्वग्रहादीनामिति वाच्यम्*** (वा) ॥ निगृहीतिः । निपठितिः ॥

### 3281: षिद्भिदादिभ्योऽङ् (3.3.104)

षिद्भ्यो भिदादिभ्यश्च स्त्रियामङ् । जृष् । ऋदृशोऽङि गुणः [2406] । जरा । त्रपूष् । त्रपा । भिदा । विदारण एवायम् । भित्तिरन्या । छिदा । मृजा ॥ (ग) कृपेः सम्प्रसारणं च । कृपा ॥

### 3282: चिन्तिपूजिकथिकुम्बिचर्चश्च (3.3.105)

अङ् स्याद्युचोपवादः । चिन्ता । पूजा । कथा । कुम्बा । चर्चा ॥

### 3283: आतश्चोपसर्गे (3.3.106)

अङ् स्यात् । क्तिनोऽपवादः । प्रदा । उपदा ॥ ***श्रदन्तरोरुपसर्गवद्वृत्तिः*** (वा) ॥ श्रद्धा । अन्तर्धा । उपसर्गे घोः किः [3270] इत्यनेन किः । अन्तर्धिः ॥

### 3284: ण्यासश्रन्थो युच् (3.3.107)

अकारस्यापवादः । कारणा । हारणा । आसना । श्रन्थना ॥ ***घट्टिवन्दिविदिभ्यश्चेति वाच्यम्*** (वा) ॥ घट्टना । वन्दना । वेदना ॥ ***इषेरनिच्छार्थस्य*** (वा) ॥ अन्वेषणा ॥ ***परेर्वा*** (वा) ॥ पर्येषणा । परीष्टिः ॥

### 3285: रोगाख्यायां ण्वुल्बहुलम् (3.3.108)

प्रच्छर्दिका । प्रवाहिका । विचर्चिका । क्वचिन्न । शिरोर्तिः ॥ ***धात्वर्थनिर्देशे ण्वुल्वक्तव्यः*** (वा) ॥ आसिका । शायिका ॥ ***इक्श्तिपौ धातुनिर्देशे*** (वा) ॥ पचिः । पचतिः ॥

***वर्णात्कारः*** (वा) ॥ निर्देशे इत्येव । अकारः । ककारः ॥ ***रादिफः*** (वा) ॥ रेफः ॥ । मत्वर्थाच्छः ॥ बहुलवचनादकारलोपः । मत्वर्थीयः ॥ ***इणजादिभ्यः*** (वा) ॥ आजिः । आतिः ॥ ***इञ्वपादिभ्यः*** (वा) ॥ वापिः । वासिः । स्वरे भेदः ॥ ***इक् कृष्यादिभ्यः*** (वा) ॥ कृषिः । गिरिः ॥

## 3286: संज्ञायाम् (3.3.109)

अत्र धातोर्ण्वुल् । उद्दालकपुष्पभञ्जिका ॥

## 3287: विभाषाख्यानपरिप्रश्नयोरिञ्च (3.3.110)

परिप्रश्ने आख्याने च गम्ये इञ् स्याच्चात् ण्वुल् । विभाषोक्तेर्यथाप्राप्तमन्येऽपि । कां त्वं कारिं कारिकां क्रियां कृत्यां कृतिं वाकार्षी । सर्वां कारिं कारिकां क्रियां कृत्यां कृति वाऽकार्षम् । एवं गणिं गणिकां गणनाम् । पाचिं पाचिकां पचां पक्तिम् ॥

## 3288: पर्यायार्हर्णोत्पत्तिषु ण्वुच् (3.3.111)

पर्यायः परिपाटीक्रमः । अर्हणमर्हः योग्यता । पर्यायादिषु द्योत्येषु ण्वुच् वा स्यात् । भवत आसिका । शायिका । अग्रगामिका । भवानिक्षुकामर्हति । ऋणे । इक्षुभक्षिकां मे धारयति । उत्पत्तौ । उक्षुभक्षिका उपपादि ॥

## 3289: आक्रोशे नञ्यनिः (3.3.112)

विभाषेति निवृत्तम् । नञि उपपदेऽनिः स्यादाक्रोशे । अजीवनिस्ते शठ भूयात् । आप्रयाणिः । कृत्यल्युटो बहुलम् [2841] भावेऽकर्तरि च कारके सञ्ज्ञायामिति च निवृत्तम् । राज्ञा भुज्यन्ते राजभोजनाः शालयः । नपुंसके भावे क्तः-[3090] ॥

## 3290: ल्युट् च (3.3.115)

हसितम् । हसनम् । योगविभागः उत्तरार्थः ॥

## 3291: कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखम् (3.3.116)

येन स्पृश्यमानस्य कर्तुः शरीरसुखमुत्पद्यते तस्मिन्कर्मण्युपपदे ल्युट् स्यात् । पूर्वेण सिद्धे नित्यसमासार्थं वचनम् । पयःपानं सुखम् । कर्तरीति किम् । गुरोः स्नापनं सुखम् । नेह गुरुः कर्ता किं तु कर्म ॥

## 3292: वा यौ (2.4.57)

अजेर्वी वा स्याद् यौ । प्रवयणम् । प्राजनम् ॥

## 3293: करणाधिकरणयोश्च (3.3.117)

ल्युट् स्यात् । इध्मप्रव्रश्चनः कुठारः । गोदोहनी स्थाली । खलः प्राक्करणाधिकरणयोरित्यधिकारः ॥

## 3294: अन्तरदेशे (8.4.24)

अन्तः शब्दाद्धन्तेर्नस्य णः स्यात् । अन्तर्हणनम् । देशे तु अन्तर्हननो देशः । अत्पूर्वस्येत्येव । अन्तर्घ्नन्ति । तपरः किम् । अन्तरघानि ॥

## 3295: अयनं च (8.4.25)

अयनस्य णोन्तः शब्दात्परस्य । अन्तरयणम् । अदेश इत्येव । अन्तरयनो देशः ॥

## 3296: पुंसि संज्ञायां घः प्रायेण (3.3.118)

## 3297: छादेर्घेऽद्व्युपसर्गस्य (6.4.96)

द्विप्रभृत्युपसर्गहीनस्य छादेर्ह्रस्वः स्याद्घे परे । दन्ताश्छाद्यन्तेऽनेन दन्तच्छदः । आकुर्वन्त्यस्मिन् आकरः ॥

## 3298: गोचरसंचरवहव्रजव्यजापणनिगमाश्च (3.3.119)

घान्ता निपात्यन्ते । हलश्च [3300] इति वक्ष्यमाणस्य घञोऽपवादः । गावश्चरन्त्यस्मिन्निति गोचरो देशः । सञ्चरन्त्यनेन सञ्चरो मार्गः । वहन्त्यनेन वहः स्कन्धः । व्रजः । व्यजस्तालवृन्तम् । निपातनाद्वीभावो न । आपणः पण्यस्थानम् । निगच्छन्त्यनेन निगमश्छन्दः । चात्कषः । निकषः ॥

## 3299: अवे तॄस्त्रोर्घञ् (3.3.120)

अवतारः कूपादेः । अवस्तारो जवनिका ॥

## 3300: हलश्च (3.3.121)

हलन्ताद्घञ् स्यात् । घापवादः । रमन्ते योगिनोऽस्मिन्निति रामः । अपमृज्यतेऽनेन व्याध्यादिरित्यपामार्गः । विमार्गः समूहनी ॥

## 3301: अध्यायन्यायोद्यावसंहाराश्च (3.3.122)

अधीयतेऽस्मिन् अध्यायः । नियन्ति उद्यवन्ति संहरन्त्यनेनेति विग्रहः ॥ ***अवहाराधारावायानामुपसङ्ख्यानम्*** (वा) ॥

## 3302: उदङ्कोऽनुदके (3.3.123)

उत्पूर्वादञ्चतेर्घञ् स्यात् न तूदके । घृतमुदच्यते उद्ध्रियतेऽस्मिन्निति घृतोदङ्कश्चर्ममयं भाण्डम् । अनुदके किम् । उदकोदञ्चनः ॥

## 3303: जालमानायः (3.3.124)

आनीयन्ते मत्स्यादयोऽनेनेत्यानायः । जालमिति किम् । आनयनः ॥

## 3304: खनो घ च (3.3.125)

चाद्धञ् । आखनः । आखानः । घित्करणमन्यतोऽप्ययमिति ज्ञापनार्थम् । तेन भगः पदमित्यादि ॥ ***खनेर्डडरेकेकवका वाच्याः*** (वा) ॥ आखः । आखरः । आखनिकः । आखनिकवकः । एते खनित्रवचनाः ॥

## 3305: ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् (3.3.126)

करणाधिकरणयोरिति निवृत्तम् । एषु दुःखसुखार्थेषूपपदेषु खल् स्यात् । तयोरेव-[2833] इति भावे कर्मणि च । कृच्छ्रे । दुष्करः कटो भवता । अकृच्छ्रे । ईषत्करः । सुकरः ॥ ***निमिमीलियां खलचोरात्वं नेति वाच्यम्*** (वा) ॥ ईषन्निमयः । दुष्प्रमयः । सुविलयः । निमयः । मयः । लयः ॥

## 3306: उपसर्गात्खल्घञोः (7.1.67)

उपसर्गादेव लभेर्नुम् स्यात् । ईषत्प्रलम्भः । दुष्प्रलम्भः । सुप्रलम्भः । उपालम्भः । उपसर्गात्किम् । लाभः ॥

## 3307: न सुदुर्भ्यां केवलाभ्याम् (7.1.68)

उपसर्गान्तररहिताभ्यां सुदुर्भ्यां लभेर्नुम्न स्यात् खल्घञोः । सुलभम् । दुर्लभम् । केवलाभ्यां किम् । सुप्रलम्भः । अतिदुर्लम्भः । कथं तर्हि अतिसुलभमतिदुर्लभमिति । यदा स्वती कर्मप्रवचनीयौ तदा भविष्यति ॥

## 3308: कर्तृकर्मणोश्च भूकृञोः (3.3.127)

कर्तृकर्मणोरीषदादिषु चोपपदेषु भूकृञोः खल् स्यात् । यथासङ्ख्यं नेष्यते । कर्तृकर्मणी च धातोरव्यवधानेन प्रयोज्ये ईषदादयस्तु ततः प्राक् ॥ ***कर्तृकर्मणोश्च्व्यर्थयोरिति वाच्यम्*** (वा) ॥ खित्वान्मुम् । अनाढ्येनाढ्येन दुःखेन भूयते दुराढ्यम्भवम् । ईषदाढ्यम्भवम् । स्वाढ्यम्भवम् । ईषदाढ्यङ्करः । दुराढ्यङ्करः । स्वाढ्यङ्करः । च्व्यर्थयोः किम् । आढ्येन सुभूयते ॥

## 3309: आतो युच् (3.3.128)

खलोऽपवादः । ईषत्पानः सोमो भवता । दुष्पानः । सुपानः ॥ ***भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज्वाच्यः*** (वा) ॥ दुःशासनः । दुर्योधन इत्यादि ॥

## 3310: षात्पदान्तात् (8.4.35)

नस्य णो न । निष्पानम् । सर्पिष्पानम् । षात्किम् । निर्णयः । पदान्तात्किम् । पुष्णाति । पदे अन्तः पदान्तोऽयमिति सप्तमीसमासोऽयम् । तेनेह न । सुसर्पिष्केण ॥

## 3311: आवश्यकाधमर्ण्ययोर्णिनिः (3.3.170)

अवश्यङ्कारि । शतंदायी ॥

## 3312: कृत्याश्च (3.3.171)

आवश्यकाधमर्ण्ययोरित्येव । अवश्यं हरिः सेव्यः । शतं देयम् ॥

## 3313: क्तिच्क्तौ च संज्ञायाम् (3.3.174)

धातोः क्तिच् क्तश्च स्यादाशिषि सञ्ज्ञायाम् । तितुत्र-[3163] इति नेट् । भवतात् । भूतिः ॥

## 3314: न क्तिचि दीर्घश्च (6.4.39)

अनिटां वनतितनोत्यादीनां च दीर्घानुनासिकलोपौ न स्तः क्तिचि परे । यन्तिः । रन्तिः । वन्तिः । तन्तिः ॥

## 3315: सनः क्तिचि लोपश्चास्यान्यतरस्याम् (6.4.45)

सनोतेः क्तिचि आत्वं वा स्याल्लोपश्च वा । सनुतात् । सातिः । सतिः । सन्तिः । देवा एनं देयासुर्देवदत्तः ॥

## 3316: अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा (3.4.18)

प्रतिषोधार्थयोरलंखल्वोरुपपदयोः क्त्वा स्यात् । प्राचां ग्रहणं पूजार्थम् । अमैवाव्ययेन [783] इति नियमान्नोपपदसमासः । दो दद्धोः [3077] । अलं दत्त्वा । घुमास्था-[2462] । पीत्वा खलु । अलंखल्वोः किम् । मा कार्षीत् । प्रतिषेधयोः किम् । अलंकारः ॥

## 3317: उदीचां माङो व्यतीहारे (3.4.19)

व्यतीहारेऽर्थे माङः क्त्वा स्यात् । अपूर्वकालार्थमिदम् ॥

## 3318: मयतेरिदन्यतरस्याम् (6.4.70)

मेङ इकारोऽन्तादेशः स्याद्वा ल्यपि । अपमित्य याचते । अपमाय । उदीचां ग्रहणाद्यथाप्राप्तमपि । याचित्वा अपमयते ॥

## 3319: परावरयोगे च (3.4.20)

परेण पूर्वस्यावरेण परस्य योगे गम्ये धातोः क्त्वा स्यात् । अप्राप्य नदीं पर्वतः । परनदीयोगोऽत्र पर्वतस्य । अतिक्रम्य पर्वतं स्थिता नदी । अवरपर्वतयोगोऽत्र नद्याः ॥

## 3320: समानकर्तृकयोः पूर्वकाले (3.4.21)

समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा स्यात् । क्त्वा तु अव्ययकृतो भावे । भुक्त्वा व्रजति । द्वित्वमतन्त्रम् । स्नात्वा भुक्त्वा पीत्वा व्रजति । अनुदात्त-[2428] इत्यनुनासिकलोपः । विष्णुं नत्वा स्तौति । स्वरत्यादेः श्र्युकः किति [2381] इति नित्यमिडभावः पूर्वविप्रतिषेधेन । स्वृत्वा । सूत्वा । धूत्वा ॥

## 3321: क्त्वि स्कन्दिस्यन्दोः (6.4.31)

एतयोर्नलोपो न स्यात् क्त्वि परे । स्कन्त्वा । ऊदित्त्वादिड्वा । स्यन्त्वा । स्यन्दित्वा ॥

## 3322: न क्त्वा सेट् (1.2.18)

सेट् क्त्वा किन्न स्यात् । शयित्वा । सेट् किम् । कृत्वा ॥

दिवं सुपर्णो गत्वाय (दिवं सुपर्णो गत्वाय) ।

## 3570: इष्ट्वीनमिति च (7.1.48)

क्त्वाप्रत्ययस्य ईनम् अन्तादेशो निपात्यते । इष्ट्वीनं देवान् । इष्ट्वा इति प्राप्ते ।

## 3571: स्नात्व्यादयश्च (7.1.49)

आदिशब्दः प्रकारार्थः । आकारस्य ईकारो निपात्यते । स्विन्नः स्नात्वी मलादिव (स्विन्नः स्नात्वी मलादिव) । पीत्वी सोमस्य वावृधे (पीत्वी सोमस्य वावृधे) । स्नात्वा पीत्वेति प्राप्ते ।

## 3572: आज्जसेरसुक् (7.1.50)

अवर्णान्तादङ्गात्परस्य जसोऽसुक् स्यात् । देवासः (देवासः) । ब्राह्मणासः (ब्राह्मणासः) ।

## 3573: श्रीग्रामण्योश्छन्दसि (7.1.56)

आमो नुट् श्रीणामुदारो धरुणो रयीणाम् (श्रीणामुदारो धरुणो रयीणाम्) । सूतग्रामणीनाम् ।

## 3574: गोः पादान्ते (7.1.57)

विद्मा हि त्वा गोपतिं शूर गोनाम् (विद्मा हि त्वा गोपतिं शूर गोनाम्) । पादान्ते किम् । गवां शता पृक्षयामेषु (गवां शता पृक्षयामेषु) । पादान्तेऽपि क्वचिन्न । छन्दसि सर्वेषां वैकल्पिकत्वात् । विराजं गोपतिं गवाम् (विराजं गोपतिं गवाम्) ।

## 3575: छन्दस्यपि दृश्यते (7.1.76)

अस्थ्यादीनामनङ् । इन्द्रो दधीचो अस्थभिः (इन्द्रो दधीचो अस्थभिः) ।

## 3576: ई च द्विवचने (7.1.77)

अस्थ्यादीनामित्येव । अक्षीभ्यां ते नासिकाभ्याम् (अक्षीभ्यां ते नासिकाभ्याम्) ।

## 3577: दृक्स्ववस्स्वतवसां छन्दसि (7.1.83)

एषां नुम् स्यात्सौ । कीदृङ्ङिन्द्रः (कीदृङ्ङिन्द्रः) । स्ववान् (स्ववान्) । स्वतवान् (स्वतवान्) । उदोष्ठ्यपूर्वस्य--[2494] ।

## 3578: बहुलं छन्दसि (7.1.103)

ततुरिः (ततुरिः) । जगुरिः पराचैः (जगुरिः पराचैः) ।

## 3579: हु ह्वरेश्छन्दसि (7.2.31)

ह्वरेर्निष्ठाया हु आदेशः स्यात् । अहुतमसि हविर्धानम् ।

## 3580: अपरिह्वृताश्च (7.2.32)

पूर्वेण प्राप्तस्यादेशस्याभावो निपात्यते । अपह्वृताः सनुयाम वाजम् (अपह्वृताः सनुयाम वाजम्) ।

## 3581: सोमे ह्वरितः (7.2.33)

इडगुणौ निपात्येते । मा नः सोमो ह्वरितः (मा नः सोमो ह्वरितः) ।

## 3582: ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ताविशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्ज्वलितिक्षरितिवमित्यमितीति च (7.2.34)

अष्टादश निपात्यन्ते । तत्र ग्रसु स्कम्भु स्तम्भु एषामुदित्त्वान्निष्ठायामिड्वतिषेधे प्राप्ते इण्निपात्यते । युवं शचीभिर्ग्रसिताममुञ्चतम् (युवं शचीभिर्ग्रसिताममुञ्चतम्) । विष्कभिते अजरे (विष्कभिते अजरे) । येन स्वः स्तभितम् (येन स्वः स्तभितम्) । सत्येनोत्तभिता भूमिः (सत्येनोत्तभिता भूमिः) । स्तभितेत्येव सिद्धे उत्पूर्वस्य पुनर्निपातनमन्योपसर्गपूर्वस्य मा भूदिति । चते याचने । कस गतौ । आभ्यां क्तस्येडभावः । चत्तो इतश्चत्तामुतः (चत्तो इतश्चत्तामुतः) । त्रिधा ह श्यावमश्विना विकस्तम् (त्रिधा ह श्यावमश्विना विकस्तम्) । उत्तानाया हृदयं यद्विकस्तम् । निपातनबहुत्वापेक्षं सूत्रे बहुवचनं विकस्ता इति । तेनैकवचनान्तोऽपि प्रयोगः साधुरेव । शसु शंसु शासु एभ्यस्तृच इडभावः । एकस्त्वष्टुरश्वस्याविशस्ता (एकस्त्वष्टुरश्वस्याविशस्ता) । ग्रावग्राभ उत शंस्ता (ग्रावग्राभ उत शंस्ता) । प्रशास्ता पोता (प्रशास्ता पोता) । तरतेर्वृङ्वृञोश्च तृच उट् उट् एतावागमौ निपात्येते । तरुतारं रथानाम् (तरुतारं रथानाम्) । तरूतारम् । वरूतारम् । वरूत्रीभिः सुशरणो नो अस्तु (वरूत्रीभिः सुशरणो नो अस्तु) । अत्र ङीबन्तनिपातनं प्रपञ्चार्थम् । वरूतृशब्दो हि निपातितः । ततो ङीपा गतार्थत्वात् उज्ज्वलादिभ्यश्चतुर्भ्यः शप इकारादेशो निपात्यते । ज्वल दीप्तौ । क्षर संचलने । टुवम उद्गिरणे । अम गत्यादिषु । इह क्षरितीत्यस्यानन्तरं क्षमितीत्यपि केचित्पठन्ति । तत्र क्षमूष् सहने इति धातुर्बोध्यः । भाषायां तु ग्रस्तस्कब्धोस्तब्धोत्तब्धचतितविकसिताः । विशसिता । शंसिता । शासिता । तरीता । तरिता । वरीता । वरिता । उज्ज्वलति । क्षरति । पाठान्तरे, क्षमति । वमति । अमति । बभूथाऽततन्थजगृभ्मववर्थेति निगमे [2527] विद्मा तमुत्सु यत आवभूथ (विद्मा तमुत्सु यत आवभूथ) । येनान्तरिक्षमुर्वाततन्थ (येनान्तरिक्षमुर्वाततन्थ) । जगृभ्मा ते दक्षिणामिन्द्र हस्तम् (जगृभ्मा ते दक्षिणामिन्द्र हस्तम्) । त्वं ज्योतिपा वितमो ववर्थ (त्वं ज्योतिपा वितमो ववर्थ) । भाषायां तु बभूविथ । आतेनिथ । जगृहिम । ववरिथेति ।

## 3583: सनिंससनिवांसम् (7.2.69)

सनिमित्येतत्पूर्वात्सनतेः सनोतेर्वा क्वसोरिट् एत्वाभ्यासलोपाभावश्च निपात्यते ॥ (अग्निंत्वाग्ने सनिंससनिवांसम्) ॥ ***पावकादीनां छन्दसि प्रत्ययस्थात्कादित्वं नेति वाच्यम्*** (वा) ॥ हिरण्यवर्णाः शुचयः पावकाः (हिरण्यवर्णाः शुचयः पावकाः ) ।

## 3584: घोर्लोपो लेटि वा (7.3.70)

दधद्रत्नानि दाशुषे (दधद्रत्नानि दाशुषे) । सोमो ददद्गन्धर्वाय (सोमो ददद्गन्धर्वाय) । यदग्निरग्नय ददात् (यदग्निरग्नय ददात्) ।

## 3585: मीनातेर्निगमे (7.3.81)

शिति ह्रस्वः । प्रमिणन्ति व्रतानि (प्रमिणन्ति व्रतानि) । लोके प्रमीणन्ति । अस्तिसिचोऽपृक्ते [2225] ।

## 3586: बहुलं छन्दसि (7.3.97)

सर्वमा इदम् (सर्वमा इदम्) । आसीदिति प्राप्ते ॥ (अस्तेर्लङ् तिप्ईडभाव अपृक्तत्वाद्धल्ङ्यादिलोपः । रुत्वविसर्गौ । संहितायां तु भोभगो [167] इति यत्वम् । लोपः शाकल्यस्य [67] इति यलोपः । गोभिरक्षाः (गोभिरक्षाः) । सिच इडभावश्छान्दसः । अट् । शेषं पूर्ववत् । ह्रस्वस्य गुणः [242] । जसि च [241] ॥ ***जसादिषु छन्दसि वावचनं प्राङ् णौ चङ्युपधायाः*** (वा) ॥ अधा शतकत्वो यूयम् (अधा शतकत्वो यूयम्) । शतकतवः । पश्वेनृभ्यो यथा गवे (पश्वेनृभ्यो यथा गवे) । पशवे ॥ ठनाभ्यस्तस्याचि [2503] इति निषेधे ***बहुलं छन्दसीति वक्तव्यम्*** (वा) ॥ अनुषग्जुजोपत् (अनुषग्जुजोपत्) ।

## 3587: नित्यं छन्दसि (7.4.8)

छन्दसि विषये चङ्युपधाया ऋवर्णस्य ऋन्नित्यम् । अवीवृधत् ।

## 3588: न छन्दस्यपुत्रस्य (7.4.35)

पुत्रभिन्नस्यादन्तस्य क्यचि ईत्वदीर्घौ न । मित्रयुः । क्याच्छन्दसि [3150] इति उः । अपुत्रस्य किम् । पुत्रीयन्तः सुदानवः (पुत्रीयन्तः सुदानवः) ॥ अपुत्रादीनामिति वाच्यम् ॥ जनीयन्तोन्वग्रवः (जनीयन्तोन्वग्रवः) । जनमिच्छन्त इत्यर्थः ।

## 3589: दुरस्युर्द्रविणस्युर्वृषण्यतिरिषण्यति (7.4.36)

एते क्यचि निपात्यन्ते । भाषायां तु उप्रत्ययाभावात् दुष्टीयति । द्रविणीयति । वृषीयति । रिष्टीयति ।

## 3590: अश्वाघस्यात् (7.4.37)

अश्व अघ एतयो क्यचि आत्स्याच्छन्दसी । अश्वायन्तो मघवन् (अश्वायन्तो मघवन्) । मात्वा वृका अघायवः । न च्छन्दसि-[3588] इति निषेधो नेत्वमात्रस्य किं तु दीर्घस्यापीति । अत्रेदमेव सूत्रं ज्ञापकम् ।

## 3591: देवसुम्नयोर्यजुषि काठके (7.4.38)

अनयोः क्यचि आत्स्याद्यजुषि कठशाखायाम् । देवायन्तो यजमानाः । सुम्नायन्तो हावमहे (सुम्नायन्तो हवामहे) । इह यजुःशब्दो न मन्त्रमात्रपरः किंतु वेदोपलक्षकः । तेन ऋगात्मकेऽपि मन्त्रे यजुर्वेदस्थे भवति । किं च ऋग्वेदेऽपि भवति । स चेन्मन्त्रो यजुषि कठशाखायां दृष्टः । यजुषीति किम् । देवाञ्जिगाति सुम्नयुः (देवाञ्जिगाति सुम्नयुः) । बह्वृचानामप्यस्ति कठशाखा ततो भवति प्रत्युदाहरणमिति हरदत्तः ।

## 3592: कव्यध्वरपृतनस्यर्चि लोपः (7.4.39)

एषामन्त्यस्य लोपः स्यात् ऋचि ऋग्विषये । सपूर्वया निविदा कव्यतायोः (सपूर्व॑या नि॒विदा॑ क॒व्यता॒योः) । अध्वर्युं वा मधुपाणिम् । दमयन्तं पृतन्युम् (द॒मय॑न्तं पृत॒न्युम्) । दधातेर्हि [3076] । जहातेश्च क्त्वि [3331] ।

## 3593: विभाषा छन्दसि (7.4.44)

हित्वा शरीरम् । हीत्वा वा ।

## 3594: सुधित वसुधित नेमधित धिष्व धिषीय च (7.4.45)

सु वसु नेम एतत्पूर्वस्य दधाते क्तप्रत्यये इत्वं निपात्यते । गर्भं माता सुधितं वक्षणासु (गर्भं॑ मा॒ता सु॒धि॑तं व॒क्षणा॑सु) । वसुधितमग्नौ । नेमधिता न पौंस्या (नेम॑धिता॒ न पौंस्या॑) । क्तिन्यपि दृश्यते । उत श्वेतं वसुधितिं निरेके (उ॒त श्वे॒तं व॒सु॑धितिं॒ निरे॑के) । धिष्ववज्रं दक्षिण इन्द्र हस्ते (धि॒ष्ववज्रं॑ दक्षि॑ण इन्द्र॒ हस्ते॑) । धत्स्वेति प्राप्ते । सुरेता रेतो धिषीय । आशीर्लिङि इट् । इटोऽत् [2257] । धीसीयेति प्राप्ते । अपोभि [442] ॥ ***मासश्छन्दसीति वक्तव्यम्*** (वा) ॥ माद्भिः । शरद्भिः (श॒रद्भिः॑) ॥ ***स्ववःस्वतवसोरुषसश्चेष्यते*** (वा) ॥ स्ववद्भिः (स्वव॒द्भिः) । समुषद्भिरजायथाः (समु॒षद्भि॑रजायथाः) । मिथुनेऽसिः । वसेः उषः किदिति प्राग्व्याख्यातम् । व कवतेर्यङि [2641] ।

## 3595: कृषेश्छन्दसि (7.4.64)

यङि अभ्यासस्य चुत्वं न । करीकृष्यते ।

## 3596: दाधर्तिदर्धर्ति दर्धर्षि बोभूतु तेतिक्तेऽलर्ष्याऽऽपनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतः सरीसृपतं वरीवृजन्मर्मृज्याऽऽगनीगन्तीति च (7.4.65)

एतेऽष्टादश निपात्यन्ते । आद्यास्त्रयो धृङो धारयतेर्वा । भवतेर्यङ्लुगन्तस्य गुणाभावः । तेन भाषायां गुणो लभ्यते । तिजेर्यङ्लुगन्तात्तङ् । इयर्तेर्लेटि हलादिःशेषापवादो रेफस्य लत्वमित्वाभावश्च निपात्यते । अलर्षि युध्म खजकृत्पुरन्दर (अल॑र्षि युध्म खजकृत्पुरन्दर) । सिपा निर्देशो न तन्त्रम् । अलर्ति दक्ष उत (अल॑र्ति॒ दक्ष॑ उ॒त) । फणतेराङ्पूर्वस्य यङ्लुगन्तस्य शतरि अभ्यासस्य नीगागमो निपात्यते । अन्वापनीफणत् (अ॒न्वा॒पनी॑फणत्) । स्यन्देः संपूर्वस्य यङ्लुकि शतरि अभ्यासस्य निक् । धातुसकारस्य षत्वम् । करोतेर्यङ्लुगन्तस्याभ्यासस्य चुत्वाभावः । क्रन्देर्लुङिच्लेरङ्द्विर्वचनमभ्यासस्य चुत्वाभावो निगागमश्च । कनिक्रदज्जनुषम् (कनि॑क्रदज्ज॒नुषं॑म्) । अक्रन्दीदित्यर्थः । बिभर्तेरभ्यासस्य जश्त्वाभावः । वि यो भरिभ्रदोषधीषु (वि यो भरि॑भ्र॒दोष॑धीषु) । ध्वरतेर्यङ्लुगन्तस्य शतरि अभ्यासस्य विगागमो धातोर्ऋकारलोपश्च । दविध्वतो रश्मयः सूर्यस्य (दवि॑ध्वतो र॒श्मय॒ः सूर्य॑स्य) । द्युतेरभ्यासस्य संप्रसारणाभावोऽत्वं विगागमश्च । दविद्युतद्दीद्यच्छोशुचानः (दवि॑द्युत॒द्दीद्य॒च्छोशु॑चानः) । तरतेः शतरि श्लौ द्वितीयैकवचने रीगागमोऽभ्यासस्य । वृजेः शतरि श्लावभ्यासस्य रीक् । मृजेर्लिटि णल् अभ्यासस्य रुक् धातोश्च

युक् । गमेराङ्गूर्वस्य लटि श्लावभ्यासस्य चुत्वाभावो नीगागमश्च । वक्ष्यन्ती वेदागनीगन्ति कर्णम् (वक्ष्यन्ती वेदागनीगन्ति कर्णम्) ।

## 3597: ससूवेति निगमे (7.4.74)

सूतेर्लिटि परस्मैपदं वुगागमोऽभ्यासस्य चात्वं निपात्यते । गृष्टिः ससूव स्थविरम् (गृष्टिः ससूव स्थविरम्) । सुपुवे इति भाषायाम् ।

## 3598: बहुलं छन्दसि (7.4.78)

अभ्यासस्य इकारः स्याच्छन्दसि । पूर्णां विवष्टि (पूर्णां विवष्टि) । वशेरेतद्रूपम् ॥

## 3599: प्रसमुपोदः पादपूरणे (8.1.6)

एषां द्वे स्तः पादपूरणे । प्रप्रायमग्निः । संसमिद्युवसे (संसमिद्युवसे) । उपोप मे परामृश (उपोप मे परामृश) । किं नोदुदु हर्पसे (किं नोदुदु हर्पसे) ।

## 3600: छन्दसीरः (8.2.15)

इवर्णान्ताद्रेफान्ताच्च परस्य मतोर्मस्य वः स्यात् । हरिवते हर्यश्वाय (हरिवते हर्यश्वाय) । गीर्वान् ।

## 3601: अनो नुट् (8.2.16)

अन्नन्तान्मतोर्नुट् स्या । अक्षण्वन्तः कर्णवन्तः (अक्षण्वन्तः कर्णवन्तः) । अस्थन्वन्तं यदनस्था (अस्थन्वन्तं यदनस्था) ।

## 3602: नाद्घस्य (8.2.17)

नान्तात्परस्य घस्य नुट् । सुपथिन्तरः ॥ ***भूरिदान्नस्तुड्वाच्यः*** (वा) ॥ भूरिदावत्तरो जनः (भूरिदावत्तरो जनः) ॥ ***ईद्रथिनः*** (वा) ॥ रथीतरः (रथीतरः) । रथीतमं रथीनाम् (रथीतमं रथीनाम्) ।

## 3603: नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगूर्तानि छन्दसि (8.2.61)

सदेर्नञ्पूर्वान्निपूर्वाच्च निष्ठायां नत्वाभावो निपात्यते । नसत्तमञ्जसा । निपत्तमस्य चरतः । असन्नं निषण्णमिति प्राप्ते । उन्देर्नञ्पूर्वस्यानुत्तम् । प्रतूर्तमिति त्वरतेः, तुर्वीत्यस्य वा । सूर्तमिति सृ इत्यस्य । गूर्तमिति गुरी इत्यस्य ।

## 3604: अम्नरूधरवरित्युभयथा छन्दसि (8.2.70)

रुर्वा रेफो वा । अम्न एव । अम्नरेव । ऊध एव । ऊधरेव । अवएव । अवरेव ।

## 3605: भुवश्च महाव्याहृतेः (8.2.71)

भुव इति (भुव इति) । भवरिति (भुवरिति) ॥

### 3606: ओमभ्यादाने (8.2.87)

ओंशब्दस्य प्लुतः स्यादारम्भे । ओ3म् अग्निमीळे पुरोहितम् (ओ3म् अ॒ग्निमी॑ळे पु॒रोहि॑तम्) । अभ्यादाने किम् । ओमित्येकाक्षरम् ।

### 3607: ये यज्ञकर्मणि (8.2.88)

ये3यजामहे । यज्ञेति किम् । ये यजामहे ।

### 3608: प्रणवष्टेः (8.2.89)

यज्ञकर्मणि टेरोमित्यादेशः स्यात् । अपां रेतांसि जिवन्तो3म् (अ॒पां रेतां॑सि जिवन्तो3म्) । टेः किम् । हलन्ते अन्त्यस्य माभूत् ।

### 3609: याज्यान्तः (8.2.90)

ये याज्या मन्त्रास्तेषामन्त्यस्य टे प्लुतो यज्ञकर्मणि । जिह्वामग्ने चकृषे हव्यवाहा3म् (जि॒ह्वाम॑ग्ने चकृषे हव्यवाहा3म्) । अन्तः किम् । याज्यानामृचां वाक्यसमुदाय रूपाणां प्रतिवाक्यं टेः स्यात् । सर्वान्त्यस्य चेत्यते ।

### 3610: ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः (8.2.91)

एषामादेः प्लुतो यज्ञकर्मणि । अग्नयेनुब्रू3हि । अग्नये गोमयानि प्रे3ष्य । अस्तु श्रौ3षट् । सोमस्याग्ने वीही वौ3षट् । अग्निमा3वह ।

### 3611: अग्नीत्प्रेषणे परस्य च (8.2.92)

अग्नीधः प्रेषणे आदेः प्लुतस्तस्मात्परस्य च । ओ3श्रा3वय ।

### 3612: विभाषा पृष्टप्रतिवचने हेः (8.2.93)

प्लुतः अकार्षीः कटम् । अकार्षं हि3 । अकार्षं हि । पृष्टेति किम् कटं करिष्यति हि । हेः किम् । कटं करोति ननु ।

### 3613: निगृह्यानुयोगे च (8.2.94)

अत्र यद्वाक्यं तस्य टेः प्लुतो वा । अद्यामावास्येत्यात्थ3 । अमावास्येत्येवंवादिनं युक्त्या स्वमतात्प्रच्याव्य एवमनुयुज्यते ।

### 3614: आम्रेडितं भर्त्सने (8.2.95)

दस्यो3दस्यो3घातयिष्यामि त्वाम् । आम्रेडितग्रहणं द्विरुक्तोपलक्षणम् । चौर3 चौर3 ।

### 3615: अङ्गयुक्तं तिङाकाङ्क्षम् (8.2.96)

अङ्गेत्यनेन युक्तं तिङन्तं प्लवते । अङ्ग कूज3 इदानीं ज्ञास्यसि जाल्म । तिङ् किम् । अङ्ग देवदत्त मिथ्या वदसि । आकाङ्क्षं किम् । अङ्ग पच । नैतदपरमाकाङ्क्षति । भर्त्सन इत्येव । अङ्गाधीष्व भक्तं तव दास्यामि ।

## 3616: विचार्यमाणानाम् (8.2.97)

वाक्यानां टेः प्लुतः । होतव्यं दीक्षितस्य गृहा3इ । न होतव्य3मिति । होतव्यं न होतव्यमिति विचार्यते । प्रमाणैर्वस्तुतत्त्वपरीक्षणं विचारः ।

## 3617: पूर्वं तु भाषायाम् (8.2.98)

विचार्यमाणानां पूर्वमेव प्लवते । अहिर्नु3 रज्जुर्नु । प्रयोगापेक्षं पूर्वत्वम् । भाषाग्रहणात्पूर्वयोगश्छन्दसीति ज्ञायते ।

## 3618: प्रतिश्रवणे च (8.2.99)

वाक्यस्य टे प्लुतोऽभ्युपगमे प्रतिज्ञाने श्रवणाभिमुख्ये च । गां मे देहि भोः । हन्त ते ददामि3 । नित्यः शब्दो भवितुमर्हति 3 । दत्त किमात्थ3 ।

## 3619: अनुदात्तं प्रश्नान्ताभिपूजितयोः (8.2.100)

अनुदात्तः प्लुतः स्यात् । दूराद्धूतादिषु सिद्धस्य प्लुतस्यानुदात्तत्वमात्रमनेन विधीयते । अग्निभूत 3 इ । पट 3 उ । अग्निभूते पटो एतयोः प्रश्नान्ते टेरनुदात्तः प्लुतः । शोभनः खल्वसि माणवक3 ।

## 3620: चिदिति चोपमार्थे प्रयुज्यमाने (8.2.101)

वाक्यस्य टेरनुदात्तः प्लुतः अग्निचिद्भाया3त् अग्निरिव भायात् । उपमार्थे किम् । कथंचिदाहुः प्रयुज्यमाने किम् । अग्निर्माणवको भायात् ।

## 3621: उपरिस्विदासीदिति च (8.2.102)

टेः प्लुतोऽनुदात्तः स्यात् । उपरिस्विदासी 3 त् (उ॒परिं॑स्विदासी 3 त्) । अधः स्विदासी 3 त् (अ॒धः स्विं॑दा॒सी 3 त्) इत्यत्र तु विचार्यमाणानाम् [3616] इत्युदात्तः प्लुतः ।

## 3622: स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेषु (8.2.103)

स्वरितः प्लुतः स्यादाम्रेडिते परेऽसूयादौ गम्ये । असूयायाम् । अभिरूपक3 अभिरूपकरिक्तं ते आभिरूप्यम् । संमतौ । अभिरूपक 3 अभिरूपक शोभनोऽसि । कोपे । अविनीतक 3 अविनीतक इदानीं ज्ञास्यसि जाल्म । कुत्सने । शाक्तीक 3 शाक्तीकरिक्ता ते शक्तिः ।

## 3623: क्षियाशीःप्रैषेषु तिङाकाङ्क्षम् (8.2.104)

आकाङ्क्षस्य तिङन्तस्य टेः स्वरितः प्लुतः स्यादाचारभेदे । स्वयं ह रथेन याति 3 उपाध्यायं पदातिं गमयति । प्रार्थनायाम् । पुत्रांश्च लप्सीष्ट 3 धनं च तात । व्यापारणे । कटं कुरु 3 ग्रामं गच्छ । आकाङ्क्षं किम् । दीर्घायुरसि अग्नीदग्नीन्विहर ।

## 3624: अनन्त्यस्यापि प्रश्नाख्यानयोः (8.2.105)

अनन्त्यस्यान्त्यस्यापि पदस्य टेः स्वरितः प्लुतः एतयोः । अगमः 3पूर्वा 3 न् ग्रामा 3 न् । सर्वपदानामयम् । आख्याने । अगम3 म् पूर्वा 3 न् ग्रामा 3 न् ।

### 3625: प्लुतावैच इदुतौ (8.2.106)

दूराद्धूतादिषु प्लुतो विहितस्तत्रैव ऐचः प्लुतप्रसङ्गे तदवयवाविदुतौ प्लवेते । ऐ 3 तिकायन । औ 3 पगव । चतुर्मात्रावत्र ऐचौ संपद्येते ।

### 3626: एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्याऽऽदुत्तरस्येदुतौ (8.2.107)

अप्रगृह्यस्य एचोऽदूराद्धूते प्लुतविषये पूर्वस्यार्धस्याकारः प्लुतः स्यादुत्तरस्य त्वर्धस्य इदुतौ स्तः ॥ ***प्रश्नान्ताभिपूजितविचार्यमाणप्रत्यभिवादयाज्यान्तेष्वेव*** (वा) ॥ प्रश्नान्ते । अगमः 3 पूर्वा 3 न् ग्रामा 3 न् । अग्निभूत 3 इ । अभिपूजिते । करोषि पट 3 उ । विचार्यमाणे । होतव्यं दीक्षितस्य गृह 3 इ । न होतव्य 3 मिति । प्रत्यभिवादे । आयुष्मानेधि अग्निभूत 3 इ । याज्यान्ते । स्तोमैर्विधेमाग्नया 3 इ । परिगणनं किम् । विष्णुभूते घातयिष्यामि त्वाम् । अधूराद्धूत इति न वक्तव्यम् । पदान्तग्रहणं तु कर्तव्यम् । इह माभूत् । भद्रं करोषि गौरिति । अप्रगृह्यस्य किम् । शोभने माने ॥ ***आमन्त्रिते छन्दसि प्लुतविकारोऽयं वक्तव्यः*** (वा) ॥ अग्न 3 इ पत्नी वः ।

### 3627: तयोर्य्वावचि संहितायाम् (8.2.108)

इदुतोर्यकारवकारौ स्तोऽचि संहितायाम् । अग्न 3 याशा । पट 3 वाशा । अग्न 3 यिन्द्रम् । पट 3 वुदकम् । अचि किम् । अग्ना 3 इ वरुणौ । संहितायां किम् । अग्न 3 इ इन्द्रः । संहितायामित्यध्यायसमाप्तेरधिकारः । इदुतोरसिद्धत्वादयमारम्भः सवर्मदीर्घत्वस्य शाकल्यस्य च निवृत्त्यर्थम् । यवयोरसिद्धत्वात् उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य [3657] इत्यस्य बाधनार्थो वा ।

### 3628: मतुवसो रु संबुद्धौ छन्दसि (8.3.1)

रु इत्यविभक्तिको निर्देशः । मत्वन्तस्य वस्वन्तस्य च रुः स्यात् । अलोऽन्त्यस्य [42] इति परिभाषया नकारस्य । इन्द्र मरुत्व इह पाहि सोमम् (इन्द्रं मरुत्व इह पाहि सोमम्) । हरिवो मेदिनं त्वा (हरिवो मेदिनं त्वा) । छन्दसीरः [3600] इति वत्वम् ।

### 3629: दाश्वान्साह्वान्मीढ्वांश्च (6.1.12)

एते क्वस्वन्ता निपात्यन्ते । मीढ्वस्तोकाय तनयाय (मीढ्वंस्तोकाय तनंयाय) ॥ ***वन उपसंख्यानम्*** (वा) ॥ क्वनिब्वनिपोः सामान्यग्रहणम् । अनुबन्धपरिभाषा तु नोपतिष्ठते । अनुबन्धस्येहानिर्देशात् । यस्त्वायन्तं वसुना प्रातरित्वः (यस्त्वायन्तं वसुना प्रातरित्वः) । इणः क्वनिप् ।

### 3630: उभयथर्क्षु (8.3.8)

अम्परे छवि नकारस्य रुर्वा । पशून्तांश्चक्रे (प॒शून्तांश्च॑क्रे) ।

## 3631: दीर्घादटि समानपादे (8.3.9)

दीर्घान्नकारस्य रुर्वा स्यादटि तौ चेन्नाटौ एकपादस्थौ स्याताम् । देवां अच्छा सुमती (दे॒वां अच्छा॑ सु॒मती) । महां इन्द्रो य ओजसा (म॒हां इन्द्रो॒ य ओज॑सा) । उभयथेत्यनुवृत्तेर्नेह । आदित्यान्याचिषामहे (आ॒दि॒त्यान्या॑चिषामहे) ।

## 3632: आतोऽटि नित्यम् (8.3.3)

अटि परतो रोः पूर्वस्यातः स्थाने नित्यमनुनासिकः । महाँ इन्द्रः (म॒हाँ इन्द्रः॑) । तैत्तिरीयास्तु अनुस्वारमधीयते । तत्र छान्दसो व्यत्यय इति प्राञ्चः । एवं च सूत्रस्य फलं चिन्त्यम् ।

## 3633: स्वतवान्पायौ (8.3.11)

रुर्वा । भवस्तस्य स्वतवाँ पायुरग्ने (भु॒व॒स्तस्य॑ स्वत॑वाँ पा॒युर॑ग्ने) ।

## 3634: छन्दसि वाऽप्राम्रेडितयोः (8.3.49)

विसर्गस्य सो वा स्यात् कुप्वोः प्रशब्दमाम्रेडितं च वर्जयित्वा । अग्ने त्रातर्ऋतस्कविः (अग्ने॑ त्रातर्ऋ॒तस्क॒विः) । गिरिर्न विश्वतस्पृथुः (गि॒रिर्न वि॒श्वत॑स्पृथुः) । नेह । वसुनः पूर्व्यस्पतिः (वसु॑नः पू॒र्व्यस्पति॑ः) । अप्रेत्यादि किम् । अग्निः प्रविद्वान् । परुषः परुषः (पर॑ुषः परुषः) ।

## 3635: कःकरत्करतिकृधिकृतेष्वनदितेः (8.3.50)

विसर्गस्य सः स्यात् । प्रदिवो अपस्कः (प्र॒दिवो॒ अप॒स्कः) । यथा नो वस्यसस्करत् (यथा॑ नो॒ वस्य॑स॒स्कर॑त्) । सुपेशसस्करति (सु॒पेश॑सस्करति) । उरुणस्कृधि (उ॒रु॒ण॑स्कृधि) । सोमं न चारु मघवत्सु नस्कृतम् (सोमं॒ न चारु॑ म॒घव॑त्सु नस्कृतम्) । अनदितेरिति किम् । यथा नो अदितिः करत् (यथा॑ नो॒ अदि॑तिः॒ कर॑त्) ।

## 3636: पञ्चम्याः परावध्यर्थे (8.3.51)

पञ्चमीविसर्गस्य सः स्यादुपरिभवार्थे परिशब्दे परतः । दिवस्परि प्रथमं जज्ञे (दि॒वस्परि॑ प्रथ॒मं ज॑ज्ञे) । अध्यर्थे किम् । दिवस्पृथिव्याः पर्योजः (दि॒वस्पृ॑थि॒व्याः पर्योज॑ः) ।

## 3637: पातौ च बहुलम् (8.3.52)

पञ्चम्या इत्येव । सूर्यो नो दिवस्पातु (सूर्यो॑ नो दि॒वस्पा॑तु) ।

## 3638: षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु (8.3.53)

वाचस्पतिं विश्वकर्माणम् (वा॒चस्पतिं॑ वि॒श्वक॑र्माणम्) । दिवस्पुत्राय सूर्याय (दि॒वस्पु॑त्राय सूर्या॑य) । दिवस्पृष्ठं भनभन्दमानः (दि॒वस्पृ॒ष्ठं भन्द॑मानः) । तमसस्पारमस्य (तम॑सस्पा॒रम॒स्य) । परिवीत इळस्पदे (परि॑वीत इ॒ळस्प॒दे) । दिवस्पयो दिधिषाणाः (दि॒वस्पयो॒ दिधि॑षाणाः) । रायस्पोषं यजमानेषु (रा॒यस्पोष॒ं यज॑मानेषु) ।

### 3639: इडाया वा (8.3.54)

पतिपुत्रादिषु परेषु । इलायास्पुत्रः (इळा॑यास्पुत्रः) । इळायाः पुत्रः । इळायास्पदे (इळा॑यास्पदे) । इळायाः पदे । निसस्तपतावनासेवने [2403] निसः सकारस्य मूर्धन्यः स्यात् । निष्टप्तं रक्षो निष्टप्ता अरातयः (निष्ट॑प्तं रक्षो॒ निष्ट॑प्ता॒ अरा॑तयः) । अनासेवने किम् । निस्तपति । पुनःपुनस्तपतीत्यर्थः ।

### 3640: युष्मत्तत्ततक्षुष्वन्तःपादम् (8.3.103)

पादमध्यस्थस्य सस्य मूर्धन्यः स्यात्तकारादिष्वेषु परेषु । युष्मदादेशाः त्वंत्वातेतवाः । त्रिभिष्ट्वं देव सवितः (त्रिभिष्ट्वं दे॑व सवितः) । तेभिष्ट्वा (तेभि॑ष्ट्वा) । आभिष्टे (आभिष्टे॑) । अप्स्वग्ने सधिष्टव (अ॒प्स्व॑ग्ने सधि॒ष्टव॑) । अग्निष्टद्विश्वम् (अ॒ग्निष्टद्विश्व॑म्) । द्यावा पृथिवी निष्टतक्षुः (द्यावा॑ पृथि॒वी नि॑ष्टत॒क्षुः) । अन्तः पादं किम् । तदग्निस्तदर्यमा (तद॒ग्निस्तद॑र्य॒मा) । यन्म आत्मनो मिन्दाभूदग्निस्तत्पनराहार्जातवेदा विचर्षणिः (यन्मे॑ आ॒त्मनो॑ मिन्दाभू॑द॒ग्निस्तत्पु॒न॒राहा॑र्जा॒तवे॑दा विच॑र्षणिः) । अत्राग्निरिति पूर्वपादस्यान्तो न तु मध्यः ।

### 3641: यजुष्येकेषाम् (8.3.104)

युष्मत्तत्ततक्षुषु परतः सस्य मूर्धन्यो वा । अर्चिभिष्ट्वम् । अग्निष्टे अग्रम् । अर्चिभिष्टतक्षुः । पक्षे अर्चिभिस्त्वमित्यादि ।

### 3642: स्तुतस्तोमयोश्छन्दसि (8.3.105)

नृभिष्टुतस्य । नृभिःस्तुतस्य । गोष्टोमम् । गोस्तोमम् । पूर्वपदादित्येव सिद्धे प्रपञ्चार्थमिदम् ।

### 3643: पूर्वपदात् (8.3.106)

पूर्वपदस्थान्निमित्तात्परस्य सस्य षो वा । यदिन्द्राग्नी दिविष्ठः (यदि॑न्द्राग्नी दि॒विष्ठः) । युवं हि स्थः स्वर्पती (युवं॒ हि स्थः स्व॑र्पती) ।

### 3644: सुञः (8.3.107)

पूर्वपदस्थान्निमित्तात्परस्य सुञो निपातस्य सस्य षः । ऊर्ध्व ऊषुणः (ऊ॒र्ध्व ऊषुणः॑) । अभीषुणः (अ॒भीषुणः॑) ।

### 3645: सनोतेरनः (8.3.108)

गोषा इन्दो नृषा असि (गो॒षा इ॑न्दो नृ॒षा अ॑सि) । अनः किम् । गोसनिः ।

### 3646: सहेः पृतनर्ताभ्यां च (8.3.109)

पृतनाषाहम् । ऋताषाहम् । चात् ऋतीषाहम् ।

### 3647: निव्यभिभ्योऽड्व्यवाये वा छन्दसि (8.3.119)

सस्य मूर्धन्यः । न्यषीदत् । न्यसीदत् । व्यषीदत् । व्यसीदत् । अभ्यष्टौत् । अभ्यस्तौत् ।

## 3648: छन्दस्यृदवग्रहात् (8.4.26)

ऋकारान्तादवग्रहात्परस्य नस्य णः । नृमणाः । पितृयाणम् ।

## 3649: नश्च धातुस्थोरुषुभ्यः (8.4.27)

धातुस्थात् । अग्ने रक्षा णः (अग्ने॒ रक्षा॑ णः) । शिक्षा णो अस्मिन् (शिक्षा॑ णो अ॒स्मिन्) । उरु णस्कृधि (उ॒रु णं॑स्कृधि) । अभीषु णः (अ॒भीषु णः॑) । मो षु णः (मो षु णः॑) ॥ इत्यष्टमोऽध्यायः ॥

*। इति वैदिकप्रकरणम् ।*

# ॥ अथ स्वरप्रकरणम् ॥

## 3650: अनुदात्तं पदमेकवर्जम् (6.1.158)

परिभाषेयं स्वरविधिविषया । यस्मिन्पदे यस्योदात्तः स्वरितो वा विधीयते तमेकमचं वर्जयित्वा शेषं तत्पदमनुदात्ताच्कं स्यात् । गोपायतं नः (गो॒पा॒यतं॑ नः) । अत्र सनाद्यन्ताः--[2304] इति धातुत्वे धातुस्वरेण यकाराकार उदात्तः शिष्टमनुदात्तम् ॥ ***सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इति वाच्यम्*** (वा) ॥ तेनोक्तोदाहरणे गुपेर्धातुस्वर आयस्य प्रत्ययस्वरश्च न शिष्यते । अत्रेति किम् । यज्ञं यज्ञम्भिवृधे गृणीतः (य॒ज्ञं य॑ज्ञम॒भिवृ॒धे गृ॑णी॒तः) । अत्र सति शिष्टोऽपि श्ना इत्यस्य स्वरो न शिष्यते किं तु तस एव ।

## 3651: अनुदात्तस्य च यत्रोदात्तलोपः (6.1.161)

यस्मिन्ननुदात्ते परे उदात्तो लुप्यते तस्योदात्तः स्यात् । देवीं वाचम् (दे॒वीं वाचं॑म्) । अत्र ङीबुदात्तः ।

## 3652: चौ (6.1.222)

लुप्ताकारेऽञ्चतौ परे पूर्वस्यान्तोदात्तः स्यात् । उदात्तनिवृत्तिस्वरापवादः । देवद्रीचीं नयत देवयन्तः (दे॒व॒द्रीचीं॑ नयत दे॒वय॒न्तः॑) ॥ ***अतद्धित इति वाच्यम्*** (वा) ॥ दाधीचः । माधूचः । प्रत्ययस्वर एवात्र ।

## 3653: आमन्त्रितस्य च (6.1.198)

आमन्त्रित स्यादिरुदात्तः स्यात् । अग्न इन्द्र वरुण मित्र देवाः (अग्न॒ इन्द्र॒ वरु॑ण॒ मित्र॒ देवाः॑) ।

## 3654: आमन्त्रितस्य च (8.1.19)

पदात्परस्यापादादिस्थितस्यामन्त्रितस्य सर्वस्यानुदात्तः स्यात् । प्रागुक्तपाष्टस्यापवादोऽयमाष्टमिकः । इमं मे गङ्गे यमुने सरस्वति (इ॒मं मे॑ गङ्गे यमुने सरस्वति) । अपादादौ किम् । शुतुद्रि स्तोमम् (शुतुं॑द्रि॒ स्तोमं॑म्) । आमन्त्रितं पूर्वमविद्यमानवत्[412] । अग्न इन्द्रं । अत्रेन्द्रादीनां निघातो न । पूर्वस्याविद्यमानत्वेन पदात्परत्वाभावात् । नामन्त्रिते

समानाधिकरणे सामान्यवचनम्[413] समानाधिकरण आमन्त्रिते परे विशेष्यं पूर्वमविद्यमानवन्न । अग्ने तेजस्विन् (अग्ने॑ तेजस्विन्) । अग्ने त्रातः (अग्ने॑ त्रातः) । सामान्यवचनं किम् । पर्यायेषु मा भूत् । अघ्न्ये देवि सरस्वति (अघ्न्ये॑ देवि सरस्वति) ।

## 3655: सामान्यवचनं विभाषितं विशेषवचने (8.1.74)

अत्र भाष्यकृता बहुवचनमिति पूरितम् । सामान्यवचनमिति च पूर्वसूत्रे योजितम् । आमन्त्रितान्ते विशेषणे परे पूर्वं बहुवचनान्तमविद्यमानवद्वा । द्वेवीः पलुर्वीरुरु नः कृणोत (द्वेवीः॑ पलुर्वीरु॒रु नः॑ कृणोत) । अत्र देवीनां विशेषणं षडिति । देवाशरण्याः । इह द्वितीयस्य निघातो वैकल्पिकः ।

## 3656: सुबामन्त्रिते पराङ्गवत्स्वरे (2.1.2)

सुबन्तमामन्त्रिते परे परस्याङ्गवत्स्वरे कर्तव्ये । द्रवत्पाणी शुभस्तपती (द्रव॑त्पाणी॒ शुभ॑स्पती) । शुभ इति शुभेः क्विबन्तात्षष्ठ्यन्तस्य परशरीरानुप्रवेशे पाष्ठिकमामन्त्रिताद्युदात्तत्वम् । न चाष्टमिको निघातः शङ्क्यः । पूर्वामन्त्रितस्याविद्यमानत्वेन पादादित्वात् । यत्ते दिवो दुहितर्मर्त भोजनम् (यत्ते॑ दिवो दुहितर्मर्त॒ भोज॑नम्) । इह दिवःशब्दस्याष्टमिको निघातः । परशुना वृश्चन् ॥ ***षष्ठ्यामन्त्रितकारकवचनम्*** (वा) ॥ षष्ठ्यन्तमामन्त्रितान्तं प्रति यत्कारकं तद्वाचकं चेति परिगणनं कर्तव्यमित्यर्थः । तेनह न । अयमग्ने जरिता (अ॒यमं॑ग्ने जरि॒ता ) । एतेनाग्ने ब्रह्मणा (ए॒तेनां॑ग्ने ब्रह्म॑णा) । समर्थानुवृत्त्या वा सिद्धम् ॥ ***पूर्वाङ्गवच्चेति वक्तव्यम्*** (वा) ॥ आ ते पितर्मरुताम् (आ ते॑ पितर्मरुताम्) । प्रति त्वा दुहितर्दिवः (प्रति॑ त्वा दुहितर्दिवः) ॥ ***अव्ययानां न*** (वा) ॥ उच्चारधीयान ॥ ***अव्ययीभावस्य त्विष्यते*** (वा) ॥ उपाभ्यधीयान ।

## 3657: उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य (8.2.4)

उदात्तस्थाने स्वरितस्थाने च यो यण् ततः परस्यानुदात्तस्य स्वरितः स्यात् । अभ्यभि हि । स्वरितस्य यणः । खलप्व्याशा । अस्य स्वरितस्य त्रैपादिकत्वेनासिद्धत्वाच्छेषनिघातो न ।

## 3658: एकादेश उदात्तेनोदात्तः (8.2.5)

उदात्तेन सहैकादेश उदात्तः स्यात् । वोऽश्वाः । क्वावरं भरुतः (क्वाव॑रं भरुतः) ।

## 3659: स्वरितो वानुदात्ते पदादौ (8.2.6)

अनुदात्ते पदादौ परे उदात्तेन सहैकादेशः स्वरितो वा स्यात् । पक्षे पूर्वसूत्रेणोदात्तः । वी1दं ज्योतिर्हृदये (वीं॑1॒दं ज्योति॒र्हृद॑ये) । अस्य श्लोको दिवीयते (अस्य श्लोको॑ दि॒वीय॑ते) । व्यवस्थितविभाषात्वादिकारयोः स्वरितः । दीर्घप्रवेशे तूदात्तः । किं च एङः पदान्तात्-[86] इति पूर्वरूपे स्वरित एव । तेऽवदनम् (ते॑ऽवदनम्) । सो 3 यमागात् (सो॒ 3॒ यमागा॑त्) । उक्तं च प्रातिशाख्ये । इकारयोश्च प्रश्लेषे क्षैपाभिनिहतेषु चेति ।

## 3660: उदात्तादनुदात्तस्य स्वरितः (8.4.66)

उदात्तात्परस्यानुदात्तस्य स्वरितः स्यात् । अग्निमीळे (अ॒ग्निमी॑ळे) । अस्याप्यसिद्धत्वाच्छेषनिघातो न । तमीशानासः (तमी॑शा॒नासः॑) ।

### 3661: नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् (8.4.67)

उदात्तपरः स्वरितपरश्चानुदात्तः स्वरितो न स्यात् । गार्ग्यादिमते तु स्यादेव । प्रय आरुः (प्र य आ॒रुः) । वोश्वाः क्का 1 भीशवः (वोश्वाः क्का॑ 1॒ भीश॑वः) ।

### 3662: एकश्रुति दूरात्संबुद्धौ (1.2.33)

दूरात्संबोधने वाक्यमेकश्रुतिः स्यात् । त्रैस्वर्यापवादः । आगच्छ भो माणवक ।

### 3663: यज्ञकर्मण्यजपन्यूङ्खसामसु (1.2.34)

यज्ञक्रियायां मन्त्र एकश्रुतिः स्याज्जपादीन्वर्जयित्वा । अग्निर्मूधा (अ॒ग्निर्मू॒र्धा) । दिवः ककुत् (दि॒वः क॒कुत्) । यज्ञेति किम् । स्वनाध्यायकाले त्रैस्वर्यमेव । अजपेति किम् । ममाग्ने वर्चो विहवेष्वस्तु (ममा॑ग्ने॒ वर्चो॑ विह॒वेष्व॑स्तु) । जपो नाम उपांशुप्रयोगः । यथा जले निमग्नस्य । न्यूङ्खा नाम षोडश ओकाराः । गीतिषु सामाख्या ।

### 3664: उच्चैस्तरां वा वषट्कारः (1.2.35)

यज्ञकर्मणि वौषड्ब्द उच्चैसत्रां वा स्यादेकश्रुतिर्वा ।

### 3665: विभाषा छन्दसि (1.2.36)

छन्दसि विभाषा एकश्रुतिः स्यात् । व्यवस्थितविभाषेयम् । संहितायां त्रैस्वर्यम् । ब्राह्मणे एकश्रुतिर्बह्वृचानाम् । अन्येषामपि यथासंप्रदायं व्यवस्था ।

### 3666: न सुब्रह्मण्यायां स्वरितस्य तूदात्तः (1.2.37)

सुब्रह्मण्याख्ये निगदे यज्ञकर्मणि [3663] इति विभाषा छन्दसि [3635] इति च प्राप्ता एकश्रुतिर्न स्यात्स्वरितस्योदात्तश्च स्यात् । सुब्रह्मण्यो3म् ॥ (सुब्रह्मणि साधुरिति यत् । न च एकादेश उदात्तोनोदात्तः [3658] इति सिद्धे पुनरत्रेमुदात्तविधानं व्यर्थमिति वाच्यम् । तत्रानुदात्त इत्यस्यानुवृत्तेः ॥ ***असावित्यन्तः*** (वा) ॥ तस्मिन्नेव निगदे प्रथमान्तस्यान्त उदात्तः स्यात् । गार्ग्यो यजते । ञित्त्वात्प्राप्त आद्युदात्तोऽनेन बाध्यते ॥ ***अमुष्येत्यन्तः*** (वा) ॥ ***स्यान्तस्योपोत्तमं च*** (वा) ॥ चादन्तस्येन द्वावुदात्तौ । गार्ग्यस्य पिता यजते ॥ ***वा नामधेयस्य*** (वा) ॥ स्यान्तस्य नामधेयस्य उपोत्तममुदात्तं वा स्यात् । देवदत्तस्य पिता यजते ।

### 3667: देवब्रह्मणोरनुदात्तः (1.2.38)

अनयोः स्वरितस्यानुदात्तः स्यात्सुब्रह्मण्यायाम् । देवाब्रह्माण आगच्छत ।

### 3668: स्वरितात्संहितायामनुदात्तानाम् (1.2.39)

स्वरितात्परेषामनुदात्तानां संहितायामेकश्रुति स्यात् । इमं मे गङ्गे यमुने सरस्वति (इ॒मं मे॑ गङ्गे यमुने सरस्वति) ।

### 3669: उदात्तस्वरितपरस्य सन्नतरः (1.2.40)

उदात्तस्वरितौ परौ यस्मात्तस्यानुदात्तस्यादात्ततरः स्यात् । सरस्वति शुतुद्रि (सरस्वति॒ शुतु॑द्रि) । व्यचक्षयत्स्वः (व्यं॑चक्षय॒त्स्वः॑) । तस्य परमाम्रेडितम् [83] ।

### 3670: अनुदात्तं च (8.1.3)

द्विरुक्तस्य परं रूपमनुदात्तं स्यात् । दिवे दिवे (दि॒वे दि॑वे) ॥ इति साधारणस्वराः ।

### 3671: धातोः (6.1.162)

अन्त उदात्तः स्यात् । गोपायतं नः (गो॒पा॒यतं॑ नः) । असि सत्यः (असिं॑ स॒त्यः) ।

### 3672: स्वपादिहिंसामच्यनिटि (6.1.188)

स्वपादीनां हिंसेश्चानिठ्यजादौ लसार्वधातुके परे आदिरुदात्तो वा स्यात् । स्वपादिरदाद्यन्तर्गणः । स्वपन्ति । श्वसन्ति । हिंसन्ति । पक्षे प्रत्ययस्वरेण मध्योदात्तता । ङ्कित्येवेष्यते । नेह स्वपानि । हिनसानि ।

### 3673: अभ्यस्तानामादिः (6.1.189)

अनिठ्यजादौ लसार्वधातुके परे अभ्यस्तानामादिरुदात्तः । ये ददति प्रिया वसु (ये दद॑ति प्रि॒या वसु॑) । परत्वाच्चित्स्वरमयं बाधते । दधाना इन्द्रे दधाना इन्द्रे ।

### 3674: अनुदात्ते च (6.1.190)

अविद्यमानोदात्ते लसार्वधातुके परेऽभ्यस्तानामादिरुदात्तः । दधासि रत्नं द्रविणं च दाशुषे (दधा॑सि॒ रत्नं॒ द्रवि॑णं च दा॒शुषे॑) ।

### 3675: भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति (6.1.192)

भीप्रभृतीनामभ्यस्तानां पिति लसार्वधातुके परे प्रत्ययात्पूर्वमुदात्तं स्यात् । योऽग्निहोत्रं जुहोति (यो॑ऽग्निहो॒त्रं जु॒हो॑ति) । मत्तु नः परिज्मा (म॒मत्तु॑ नः॒ परि॑ज्मा) । माता यद्वीरं दधनत् (मा॒ता यद्वी॒रं द॒धन॑त्) । जागर्षित्वम् ।

### 3676: लिति (6.1.193)

प्रत्ययात्पूर्वमुदात्तम् । चिकीर्षकः ।

### 3677: आदिर्णमुल्यन्यतरस्याम् (6.1.194)

अभ्यस्तानामादिरुदात्तो वा णमुलि परे लोलूयंलोलूयम् । पक्षे लित्स्वरः ।

### 3678: अचः कर्तृयकि (6.1.195)

उपदेशेऽजन्तानां कर्तृयकि परे आदिरुदात्तो वा । लूयते केदारः स्वयमेव ।

## 3679: चङ्यन्यतरस्याम् (6.1.218)

चङन्ते धातावुपोत्तममुदात्तं वा । मा हि चीकरताम् । धात्वकार उदात्तः । पक्षान्तरे चङुदात्तः ॥ इति धातुस्वराः ॥

## 3680: कर्षात्वतो घञोन्त उदात्तः (6.1.159)

कर्षतेर्धातोराकारवतश्च घञन्तस्यान्त उदात्तः स्यात् । कर्षः । शपा निर्देशात्तुदादेराद्युदात्त एव । कर्षः । पाकः ।

## 3681: उञ्छादीनां च (6.1.160)

अन्त उदात्तः स्यात् । उञ्छादिषु युगशब्दो घञन्तोऽगुणो निपात्यते कालविशेषे रथाद्यवयवे च । वैश्वानरः कुशिकेभिर्युगेयुगे (वैश्वानरः कुशिकेभिर्युगेयुगे) । अन्यत्र योगेयोगे तवस्तरम् (योगेयोगे तवस्तरम्) । भक्षशब्दो घञन्तः । गावः सोमस्य तवस्तरम् (गावः सोमस्य तवस्तरम्) । भक्षशब्दो घञन्तः । गावः सोमस्य प्रथमस्य भक्षः (गावः सोमस्य प्रथमस्य भक्षः) । उत्तमशश्वत्तमावपि । उदुत्तमं वरुण (उदुत्तमं वरुण) । शश्वत्तममीलते (शश्वत्तममीलते) ।

## 3682: चतुरः शसि (6.1.167)

चतुरोन्त उदात्तः शसि परे । चतुरः कल्पयन्तः । अचि र-[299] इति रादेशस्य पूर्वविधौ स्थानिवत्त्वान्नेह । चतस्रः पश्य । चतेरुरन् । नित्त्वादाद्युदात्तता ।

## 3683: झल्युपोत्तमम् (6.1.180)

षड्त्रिचतुर्भ्यो या झलादिर्विभक्तिस्तदन्ते पदे उपोत्तममुदात्तं स्यात् । अध्वर्युभिः पञ्चभिः (अध्वर्युभिः पञ्चभिः) । नवभिर्वाजैर्नवती (नवभिर्वाजैर्नवती) । च (च) । सप्तम्भोजायमानः (सप्तम्भोजायमानः) । आदशभिर्विवस्वतः (आदशभिर्विवस्वतः) । उपोत्तमं किम् । आषड्भिर्हूयमानः (आषड्भिर्हूयमानः) । विश्वैर्दवैस्त्रिभिः (विश्वैर्दवैस्त्रिभिः) । झलि किम् । नवानां नवतीनाम् (नवानां नवतीनाम्) ।

## 3684: विभाषा भाषायाम् (6.1.189)

उक्तविषये ।

## 3685: सर्वस्य सुपि (6.1.191)

सुपि परे सर्वशब्दस्यादिरुदात्तः स्यात् । सर्वे नन्दन्ति यशसा (सर्वे नन्दन्ति यशसा) ।

## 3686: ञ्नित्यादिर्नित्यम् (6.1.197)

ञिदन्तस्य चादिरुदात्तः स्यात् । यस्मिन्विश्वानि पौंस्या (यस्मि॒न्विश्वा॑नि॒ पौंस्या॑) । पुंसः कर्मणि ब्राह्मणादित्वात् ष्यञ् । सुते दधिष्व नश्चनः (सु॒ते द॑धिष्व न॒श्चनः॑) । चायतेरसुन् । चायेरन्ने ह्रस्वश्च [3639] इति चकारादसुनो नुडागमश्च ।

### 3687: पथिमथोः सर्वनामस्थाने (6.1.199)

आदिरुदात्तः स्यात् । अयं पन्थाः (अ॒यं पन्थाः॑) सर्वनामस्थाने किम् । ज्योतिष्मः पथो रक्ष (ज्योति॑ष्मतः प॒थो र॑क्ष) । उदात्तनिवृत्तिस्वरेणान्तोदात्तं पदम् ।

### 3688: अन्तश्च तवैयुगपत् (6.1.200)

तवैप्रत्ययान्तस्याद्यन्तौ युगपदाद्युदात्तौ स्तः । हर्षसे दातवा उ (हर्ष॑से॒ दात॒वा उ॑) ।

### 3689: क्षयो निवासे (6.1.201)

आद्युदात्तः स्यात् । स्वे क्षये शुचिव्रत (स्वे क्षये॑ शुचिव्रत) ।

### 3690: जयः करणम् (6.1.202)

करणवाची जयशब्द आद्युदात्तः स्यात् । जयत्यनेन जयोऽश्वः ।

### 3691: वृषादीनां च (6.1.203)

आदिरुदात्तः । आकृतिगणोऽयम् । वाजेभिर्वाजिनीवती (वाजे॑भिर्वा॒जिनी॑वती) । इन्द्रं वाणीः (इन्द्रं॑(आ) वाणीः॑) ।

### 3692: संज्ञायामुपमानम् (6.1.204)

उपमान शब्दः संज्ञायामाद्युदात्तः । चञ्चेव चञ्चा । कनोऽत्र लुप् । एतदेव ज्ञापयति क्वचित्स्वरविधौ प्रत्ययलक्षणं नेति । संज्ञायां किम् । अग्निर्माणवकः । उपमानं किम् । जैत्रः ।

### 3693: निष्ठा च द्व्यजनात् (6.1.205)

निष्ठान्तस्य द्व्यचः संज्ञायामादिरुदात्तो न त्वाकारः । दत्तः । द्व्यच् किम् । चिन्तितः । अनात्किम् । त्रातः । संज्ञायामित्यनुवृत्तेर्नेह । कृतम् । हृतम् ।

### 3694: शुष्कधृष्टौ (6.1.206)

एतावाद्युदात्तौ स्तः । असंज्ञार्थमिदम् । अत सं न शुष्कम् (अत॒ सं न शुष्कं॑म् ) ।

### 3695: आशितः कर्ता (6.1.207)

कर्तृवाची आशितशब्द आद्युदात्तः । कृषन्नित्फाल आशितम् (कृषन्नित्फाल॒ आशि॑तम्) ।

### 3696: रिक्ते विभाषा (6.1.208)

रिक्तशब्दे वाऽऽदिरुदात्तः । रिक्तः । संज्ञायां तु निष्टा च द्व्यजनात् [3693] इति नित्यमाद्युदात्तत्वं पूर्वविप्रतिषेधेन ।

### 3697: जुष्टार्पिते च छन्दसि (6.1.209)

आद्युदात्ते वा स्तः ।

### 3698: नित्यं मन्त्रे (6.1.210)

एतत्सूत्रं शक्यमकर्तुम् । जुष्टो दमूनाः (जुष्टो॒ दमू॑नाः) । षळर आहुरर्पितम् (षळ॑र आहु॒रर्पि॑तम्) । इत्यादेः पूर्वेणैव सिद्धेः । छन्दसि पाठस्य व्यवस्थिततया विपरीतापादनायोगात् । अर्पिताः षष्टिर्न च लाचलासः (अ॒र्पि॒ताः ष॒ष्टिर्न च॑लाच॒लासः॑) । इत्यत्रान्तोदात्तदर्शनाच्च ।

### 3699: युष्मदस्मदोर्ङसि (6.1.211)

आदिरुदात्तः स्यात् । नहिषस्तव नो मम ।

### 3700: ङयि च (6.1.212)

तुभ्यं हिन्वानः (तुभ्यं॑ हिन्वा॒नः) । मह्यं वातः पवताम् (मह्यं॒ वातः॑पवताम्) ।

### 3701: यतोऽनावः (6.1.213)

यत्प्रत्ययान्तस्य द्व्यच आदिरुदात्तो नावं विना । यज्ञन्त्यस्य काम्या (यु॒ञ्जन्त्यं॑स्य काम्या॑) । कमेर्णिङन्तादचो यत् । ह्रनावः किम् । नवतिं नाव्यानाम् (न॒व॒तिं ना॒व्याना॑म्) ।ट

### 3702: ईडवन्दवृशंसदुहां ण्यतः (6.1.214)

एषां ण्यदन्तानामादिरुदात्तः । ईड्यो नूतनैरुत (ईड्यो॒ नूत॑नैरु॒त) । आजुह्वान ईड्यो (आ॒जुह्वा॑न ईड्यो॒) । श्रेष्ठं नो धेहिवार्यम् (श्रेष्ठं नो धेहि॒ वार्यम्) । उक्थमिन्द्राय शंस्यम् (उक्थमिन्द्रा॑य॒ शंस्यं॑म्) ।

### 3703: विभाषा वेण्विन्धानयोः (6.1.215)

आदिरुदात्तो वा । इन्धानो अग्निम् (इन्धा॑नो अ॒ग्निम्) ।

### 3704: त्यागरागहासकुहश्वठक्रथानाम् (6.1.216)

आदिरुदात्तो वा । आद्यास्त्रयो घञन्ताः । त्रयः पचाद्यजन्ताः ।

### 3705: मतोः पूर्वमात्संज्ञायां स्त्रियाम् (6.1.219)

मतोः पूर्वमाकार उदात्तः स्त्रीनाम्नि । उदुम्बरावती । शरावती ।

### 3706: अन्तोऽवत्याः (6.1.220)

अवतीशब्दस्यान्त उदात्तः । वेत्रवती । ङीपः पित्त्वादनुदात्तत्वं प्राप्तम् ।

### 3707: ईवत्याः (6.1.221)

ईवत्यन्तस्यापि प्राग्वत् । अहीवती । मुनीवती ॥

### फि1: फिषोऽन्त उदात्तः (10.1.1)

प्रातिपदिकं फिट् । तस्यान्त उदात्तः स्यात् । उच्चैः ॥

## फि2: पाटलापालङ्काम्बासागरार्थानाम् (10.1.2)

एतदर्थानामन्त उदात्तः । 'पाटला' 'फलेरुहा' 'सुरूपा' 'पाकला' इति पर्यायाः । लघावन्ते--[फि42] इति प्राप्ते । 'अपालङ्क' 'व्याधिघात' 'आरेवत' 'आरग्वध' इति पर्यायाः । अम्बार्थः । माता । 'उनर्वन्नन्तानाम्' [फि32] इत्याद्युदात्तत्वे प्राप्ते । सागरः । समुद्रः ॥

## फि3: गेहार्थानामस्त्रियाम् (10.1.3)

गेहम् । 'नब्विषयस्य--' [फि26] इति प्राप्ते । 'अस्त्रियाम्' किम् । शाला । आद्युदात्तोऽयम् । इहैव पर्युदासाज्ज्ञापकात् ॥

## फि4: गुदस्य च (10.1.4)

अन्त उदात्तः स्यान्न तु स्त्रियाम् । गुदम् । 'अस्त्रियाम्' किम् 'आमन्त्रेभ्यस्ते गुदाभ्यः' ॥

## फि5: ध्यपूर्वस्य स्त्रीविषयस्य (10.1.5)

धकारयकारपूर्वो योऽन्त्योच्स उदात्तः । अन्तर्धा । 'स्त्रीविषयवर्ण--' [फि43] इति प्राप्ते । छाया । माया । जाया । 'यान्तस्यान्त्यात्पूर्वम्' [फि62] इत्याद्युदात्तत्वे प्राप्ते । 'स्त्री' इति किम् । बाह्यम् । यञन्तत्वादाद्युदात्तत्वम् । 'विषयग्रहणम्' किम् । इभ्या । क्षत्रिया । 'यतोऽनावः' [3701] इत्याद्युदात्त इभ्यशब्दः । क्षत्रियशब्दस्तु 'यान्तस्यान्त्यात्पूर्वम्' [फि62] इति मध्योदात्तः ।

## फि6: खान्तस्याश्मादेः (10.1.6)

नखम् । उखा । सुखम् । दुःखम् । नखस्य 'स्वाङ्गशिटाम्--' [फि29] इत्याद्युदात्तत्वे प्राप्ते । उखा नाम भाण्डविशेषः । तस्य कृत्रिमत्वात् 'खय्युवर्णं कृत्रिमाख्या चेत्' [फि31] इत्युवर्णस्योदत्तत्वे प्राप्ते । सुखदुःखयोः 'नब्विषयस्य--' [फि26] इति प्राप्ते । 'अश्मादेः किम् । शिखा । मुखम् । मुखस्य 'स्वाङ्गशिटाम्--' [फि29] इति वा आद्युदात्तत्वम् । शिखायास्तु 'शीङः खो निह्रस्वश्च' इत्युणादिषु नित्त्वोक्तेरन्तरङ्गत्वाट्टापः प्रागेव 'स्वाङ्गशिटाम्--' [फि29] इति वा बोध्यम् ॥

## फि7: बंहिष्ठवत्सरशितित्थानाम् (10.1.7)

एषामन्त उदात्तः स्यात् । अतिशयेन बहुलो बंहिष्ठः । नित्त्वादाद्युदात्तत्वे प्राप्ते । 'बंहिष्ठैरश्वैः सुवृता रथेन । 'यद्बंहिष्ठं नातिविधे इत्यादौ व्यत्ययादाद्युदात्तः । संवत्सरः । अव्ययपूर्वपदप्रकृतिस्वरोऽत्र बाध्यत इत्याहुः । सप्ततिः । अशीतिः । 'लघावन्ते--' [फि42] इति प्राप्ते । चत्वारिंशत् । इहापि प्राग्वत् । 'अभ्यूर्णवाना प्रभृथस्यायोः' । अव्ययपूर्वपदप्रकृतिस्वरोऽत्र बाध्यत इत्याहुः । थाथादिसूत्रेण गतार्थमेतत् ॥

## फि8: दक्षिणस्य साधौ (10.1.8)

अन्त उदात्तः स्यात् । साधुवाचित्वाभावे तु व्यवस्थायां सर्वनामतया 'स्वाङ्गशिटाम्--' फि29 इत्याद्युदातः । अर्थान्तरे तु 'लघावन्ते--' फि42 इति गुरुरुदात्तः ।

## फि9: स्वाङ्गाख्यायामादिर्वा (10.1.9)

इह दक्षिणस्याद्यन्तौ पर्यायेणोदात्तौ स्तः । दक्षिणो बाहुः । 'आख्याग्रहणम्' किम् । प्रत्यङ्मुखस्यासीनस्य वामपाणिर्दक्षिणो भवति ।

## फि10: छन्दसि च (10.1.10)

अस्वाङ्गार्थमिदम् । दक्षिणः । इह पर्यायेणाद्यन्तावुदात्तौ ।

## फि11: कृष्णस्यामृगाख्या चेत् (10.1.11)

अन्त उदात्तः । 'वर्णानां तण--' फि33 इत्याद्युदात्तत्वे प्राप्ते अन्तोदत्तो विधीयते । कृष्णानां व्रीहीणां । 'कृष्णो नोनाव वृषभः' । मृगाख्यायां तु । कृष्णो रात्र्यै ॥

## फि12: वा नामधेयस्य (10.1.12)

कृष्णस्येत्येव । 'अयं वां कृष्णो अश्विना' । कृष्णर्षिः ॥

## फि13: शुक्लगौरयोरादिः (10.1.13)

नित्यमुदात्तः स्यादित्येके । वेत्यनुवर्तत इति तु युक्तम् । 'सरो गौरो यथा वा' इत्यत्रान्तोदात्तत्वदर्शनात् ॥

## फि14: अङ्गुष्ठोदकबककवशानां छन्दस्यन्तः (10.1.14)

अङ्गुष्ठस्य 'स्वाङ्गानामकुर्वादीनाम्' फि52 इति द्वितीयस्योदात्तत्वे प्राप्तेऽन्तोदात्तर्थ आरम्भः । वशाग्रहणं नियमार्थं छन्दस्येवेति । तेन लोक आद्युदात्ततेत्याहुः ।

## फि15: पृष्ठस्य च (10.1.15)

छन्दस्यन्त उदात्तः स्याद्वा भाषायाम् । पृष्ठम् ॥

## फि16: अर्जुनस्य तृणाख्या चेत् (10.1.16)

'उनर्वन्नन्तानाम्' फि32 इत्याद्युदात्तस्यापवादः ॥

## फि17: आर्यस्य स्वाम्याख्या चेत् (10.1.17)

'यान्तस्यान्त्यात्पूर्वम्' फि62 इति 'यतोऽनावः' 3701 इति वाद्युदात्ते प्राप्ते वचनम् ॥

## फि18: आशाया अदिगाख्या चेत् (10.1.18)

दिगाख्याव्यावृत्त्यर्थमिदम् । अत एव ज्ञापकाद्दिकपर्यायस्याद्युदात्तता । 'इन्द्र आशाभ्यस्परि' ॥

## फि19: नक्षात्राणामब्विषयाणाम् (10.1.19)

अन्त उदात्तः स्यात् । आश्लेषानुराधादीनां 'लघावन्ते--' फि42 इति प्राप्ते ज्येष्ठाश्रविष्ठाधनिष्ठानामिष्ठन्नन्तत्वेनाद्युदात्ते प्राप्ते वचनम् ॥

### फि20: न कुपूर्वस्य कृत्तिकाख्या चेत् (10.1.20)

अन्त उदात्तो न । कृत्तिका नक्षत्रम् । केचित्तु कुपूर्वो य आप्तद्विषयाणामिति व्याख्याय 'आर्यिका' 'बहुलिका' इत्यत्राप्यन्तोदात्तो नेत्याहुः ॥

### फि21: घृतादीनां च (10.1.21)

अन्त उदात्तः । 'घृतं मिमिक्षे' । आकृतिगणोऽयम् ॥

### फि22: ज्येष्ठकनिष्ठयोर्वयसि (10.1.22)

अन्त उदात्तः स्यात् । 'ज्येष्ठ आह चमसा' । 'कनिष्ठ आह चतुरः' । 'वयसि' किम् । ज्येष्ठः श्रेष्ठः । कनिष्ठोऽल्पिकः । इह नित्त्वादाद्युदात्त एव ॥

### फि23: बिल्वतिष्ययोः स्वरितो वा (10.1.23)

अनयोरन्तः स्वरितो वा स्यात् । पक्ष उदात्तः ॥

### फि24: अथादिः प्राक् शकटेः (10.2.24)

अधिकारोऽयम् । 'शकटिशकट्योः--' फि69 इति यावत् ॥

### फि25: ह्रस्वान्तस्य स्त्रीविषयस्य (10.2.25)

आदिरुदात्तः स्यात् । बलिः । तनुः ॥

### फि26: नब्विषयस्यानिसन्तस्य (10.2.26)

'वने न वा यः' । इसन्तस्य तु सर्पिः । नब्नपुंसकम् ॥

### फि27: तृणधान्यानां च द्व्यषाम् (10.2.27)

द्व्यचामित्यर्थः । कुशाः । काशाः । माषाः । तिलाः । बह्वचां तु गोधूमाः ॥

### फि28: त्रः सङ्ख्यायाः (10.2.28)

पञ्च । चत्वारः ॥

### फि29: स्वाङ्गशिटामदन्तानाम् (10.2.29)

शिट् सर्वनाम । 'कर्णाभ्याम् चुबुकादधि' । 'विश्वो विहाय' ॥

### फि30: प्राणिनां कुपूर्वम् (10.2.30)

कवर्गात्पूर्व आदिरुदात्तः । काकः । वृकः । 'शुकेषु मे' । 'प्राणिनाम्' किम् । 'क्षीरं सर्पिर्मधूदकम्' । कुपूर्वङ्किम् धनुः ॥

### फि31: खय्युवर्णं कृत्रिमाख्या चेत् (10.2.31)

खयि पर उवर्णमुदात्तं स्यात् । कन्दुकः ॥

## फि32: उनर्वन्नन्तानाम् (10.2.31)

उन । 'वरु॑णं वो रि॒शाद॑सम्' । ऋ । 'स्वसा॑रं त्वा कृणवै॒ । वन् । 'पीवा॑नं मेषम्' ॥

## फि33: वर्णानां तणतिनितान्तानाम् (10.2.33)

आदिरुदात्तः । एतः । हरिणः । शितिः । पृश्निः । हरित् ॥

## फि34: ह्रस्वान्तस्य ह्रस्वमनृताच्छील्ये (10.2.34)

ऋद्वर्जं ह्रस्वान्तस्यादिभूतं ह्रस्वमुदात्तं स्यात् । मुनिः ॥

## फि35: अक्षस्यादेवनस्य (10.2.35)

आदिरुदात्तः । 'तस्य॒ नाक्षः' । देवने तु 'अ॒क्षैर्मा दी॑व्यः' ॥

## फि36: अर्धस्यासमद्योतने (10.2.36)

अर्धो ग्रामस्य । समेंऽशके तु अर्धं पिप्पल्याः ॥

## फि37: पीतद्वर्थानाम् (10.2.37)

आदिरुदात्तः । पीतद्रुः सरलः ॥

## फि38: ग्रामादीनां च (10.2.38)

ग्रामः । सोमः । यामः ॥

## फि39: लुबन्तस्योपमेयनामधेयस्य (10.2.39)

चञ्चेव चञ्चा । 'स्फिगन्तस्य' इति पाठान्तरम् । स्फिगिति लुपः प्राचां संज्ञा ॥

## फि40: न वृक्षपर्वतविशेषव्याघ्रसिंहमहिषाणाम् (10.2.40)

एषामुपमेयनाम्नामादिरुदात्तोअ न । ताल इव तालः । मेरुरिव मेरुः । व्याघ्रः । सिंहः । महिषः ॥

## फि41: राजविशेषस्य यमन्वा चेत् (10.2.41)

यमन्वा वृद्धः । आङ्गमुदाहरणम् । आङ्गाः प्रत्युदाहरणम् ॥

## फि42: लघावन्ते द्वयोश्च बह्वषो गुरुः (10.2.42)

अन्ते लघौ द्वयोश्च लघ्वोः सतोर्बह्वच्कस्य गुरुरुदात्तः । कल्याणः । कोलाहलः ॥

## फि43: स्त्रीविषयवर्णाक्षुपूर्वाणाम् (10.2.43)

एषां त्रयाणामाद्युदात्तः । स्त्रीविषयम् । मल्लिका । वर्णः । श्येनी । हरिणी । अक्षुशब्दात्पूरोऽस्त्येषां त अक्षुपूर्वाः । तरक्षुः ॥

**फि44: शकुनीनां च लघु पूर्वम् (10.2.44)**

पूर्वं लघु उदात्तं स्यात् । कुक्कुटः । तित्तिरिः ॥

**फि45: नर्तुप्राणाख्यायाम् (10.2.45)**

यथालक्षणं प्राप्तमुदात्तत्वं न । वसन्तः । कृकलासः ॥

**फि46: धान्यायां च वृद्धक्षान्तानाम् (10.2.46)**

आदिरुदात्तः । कान्तानाम् । श्यामाकाः । षान्तानाम् । राजमाषाः ॥

**फि47: जनपदशब्दानामषान्तानाम् (10.2.47)**

आदिरुदात्तः । केकयः । यान्तस्यान्त्यात् पूर्वमिति प्राप्ते ॥

**फि48: हयादीनामसंयुक्तलान्तानामन्तः पूर्वं वा (10.2.48)**

हयिति हल्संज्ञा । पललम् । शललम् । 'हयादीनाम्' किम् । एकलः । 'असंयुक्त--' इति किम् । मल्लः ॥

**फि49: इगन्तानां च द्व्यषाम् (10.2.49)**

आदिरुदात्तः । कृषिः ॥

**फि50: अथ द्वितीयं प्रागीषात् (10.3.50)**

'ईषान्तस्य हलादेः--' [फि66] इत्यतः प्राग्द्वितीयाधिकारः ॥

**फि51: त्र्यचां प्राङ्मकरात् (10.3.51)**

'मकरवरूढ--' [फि57] इत्यतः प्राक्त्र्यचामित्यधिकारः ॥

**फि52: स्वाङ्गानामकुर्वादीनाम् (10.3.52)**

कवर्गरेफवकारादीनि वर्जयित्वा त्र्यचां स्वाङ्गानां द्वितीयमुदात्तम् । ललाटम् । कुर्वादीनां तु । कपोलः । रसना । वदनम् ॥

**फि53: मादीनां च (10.3.53)**

मलयः । मकरः ॥

**फि54: शादीनां शाकानाम् (10.3.54)**

शीतन्या । शतपुष्पा ॥

**फि55: पान्तानां गुर्वादीनाम् (10.3.55)**

पादपः । आतपः । लघ्वादीनां तु । अनूपम् । द्व्यचां तु । नीपम् ॥

**फि56: युतान्यण्यन्तानाम् (10.3.56)**

युत । अयुतम् । अनि । धमनिः । अणि । विपणिः ॥

**फि57: मकरवरूढपारेवतवितस्तेक्ष्वार्जिद्राक्षाकलोमाकाष्ठापेष्ठाकाशीनामा-दिर्वा (10.3.57)**

एषामादिर्द्वितीयो वोदात्तः । मकरः । वरूढ इत्यादि ॥

**फि58: छन्दसि च (10.3.58)**

अमकराद्यर्थ आरम्भः । लक्ष्यानुसारादादिर्द्वितीयं चोदात्तं ज्ञेयम् ॥

**फि59: कर्दमादीनां च (10.4.59)**

आदिर्द्वितीयो वोदात्तः ॥

**फि60: सुगन्धितेजनस्य ते वा (10.3.60)**

आदिर्द्वितीयः तेशब्दश्चेति त्रयः पर्यायेणोदात्ताः । सुगन्धितेजनाः ॥

**फि61: नपः फलान्तानाम् (10.3.61)**

आदिर्द्वितीयं वोदात्तम् । राजादनफलम् ॥

**फि62: यान्तस्यान्त्यात्पूर्वम् (10.3.62)**

कुलायः । तलयः । वलयः ॥

**फि63: थान्तस्य च नालघुनी (10.3.63)**

नाशब्दो लघु च उदात्ते स्तः । सनाथा सभा ॥

**फि64: शिशुमारोदुम्बरबलीवर्दोष्ट्रारपुरूरवसां च (10.3.64)**

अन्त्यात्पूर्वमुदात्तं द्वितीयं वा ॥

**फि65: साङ्काश्यकाम्पिल्यनासिक्यदार्वाघाटानाम् (10.3.65)**

द्वितीयमुदात्तं वा ॥

**फि66: ईषान्तस्य हयादेरादिर्वा (10.3.66)**

हलीषा । लाङ्गलीषा ॥

**फि67: उशीरदाशेरकपालपलालशैवालश्यामाकशारीरशरावहृदयहिरण्यारण्यापत्यदेवराणाम् (10.3.67)**

एषामादिरुदात्तः स्यात् ॥

**फि68: महिष्याषाढयोर्जायेष्टकाख्या चेत् (10.3.68)**

आदिरुदात्तः । महिषी जाया । आषाढा उपदधाति ॥

**फि69: शकटिशकट्योरक्षरमक्षरं पर्यायेण (10.4.69)**

उदात्तम् । शकटिः । शकटी ।

## फि70: गोष्ठजस्य ब्राह्मणनामधेयस्य (10.4.70)

अक्षरमक्षरं पर्यायेणोदात्तम् । गोष्ठजो ब्राह्मणः । अन्यत्र गोष्ठजः पशुः । कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः ॥

## फि71: पारावतस्योपोत्तमवर्जम् (10.4.71)

शेषं क्रमेणोदात्तम् । पारावतः ॥

## फि72: धूम्रजानुमुञ्जकेशकालवालस्थालीपाकानामधूजलस्थानाम् (10.4.72)

एषां चतुर्णां धूप्रभृतींश्चतुरो वर्जयित्वा शिष्टानि क्रमेणोदात्तानि । धूम्रजानुः । मुञ्जकेशः । कालवालः । स्थालीपाकः ॥

## फि73: कपिकेशहरिकेशयोश्छन्दसि (10.4.73)

कपिकेशः । हरिकेशः ॥

## फि74: न्यङ्स्वरौ स्वरितौ (10.4.74)

स्पष्टम् । न्यङ्त्तानः । 'व्यंचक्षयुस्वंः ॥

## फि75: न्यर्बुदव्यल्कशयोरादिः (10.4.75)

स्वरितः स्यात् । न्यर्बुदाय स्वाहा । पाकदूर्वा व्यल्कशा ॥

## फि76: तिल्यशिक्यमत्यकर्ष्मर्यधान्यकन्याराजन्यमनुष्याणामन्तः (10.4.76)

स्वरितः स्यात् । तिलानां भवनं क्षेत्रं तिल्यम् । वैश्वानर्या शिक्यमादत्ते । प्रभिन्नायमत्यमन्व्यास्यति । वज्रः कार्ष्मर्योर्वज्रेण । 'यतोऽनावः' 3701 इति प्राप्ते । कार्ष्मर्यमुपयाति । धान्यमसिधिनुहि । मावीरवीकन्या । राजन्यो वज्रस्य रूपम् । प्रतीचीं मनुष्याः ॥

## फि77: बिल्वभक्ष्यवीर्याणि छन्दसि (10.4.77)

अन्तस्वरितानि । ततो बिल्व उदतिष्ठत् । बलं विरुजवीर्यम् ॥

## फि78: त्वत्त्वसमसिमेत्यनुच्चानि (10.4.78)

'स्तरीरुं त्वत्' । 'उत त्वं पश्यन्' । 'नभंन्तामन्यके संमे' । 'सिमंस्मै' ॥

## फि79: सिमस्याथर्वणेऽन्त उदात्तः (10.4.79)

अथर्वण इति प्रायिकम् । तत्र दृष्टस्येत्येवंपरं वा । तेन 'वासस्तनुते सिमस्मै' इत्यृग्वेदेऽपि भवत्येव ॥

## फि80: निपाता आद्युदात्ताः (10.4.80)

स्वाहा ॥

**फि81: उपसर्गाश्चाभिवर्जम् (10.4.81)**

॥

**फि82: एवादीनामन्तः (10.4.82)**

एवमादीनामिति पाठान्तरम् । एव । एवम् । नूनम् । सह । 'सह ते पूत्र सूरिभिः' । षष्ठस्य तृतीये 'सहस्य सः-- [1009] इति प्रकरणे सहशब्द आद्युदात्त इति तु प्राञ्चः । तच्चिन्त्यम् ॥

**फि83: वाचादीनामुभावुदात्तौ (10.4.83)**

उभौग्रहणमनुदात्तं पदमेकवर्जमित्यस्य बाधाय ॥

**फि84: चादयोऽनुदात्ताः (10.4.84)**

स्पष्टम् ॥

**फि85: यथेति पादान्ते (10.4.85)**

'तं नेमिमृभवो यथा । 'पादान्ते' किम् । 'यथानो अदितिः करत्' ॥

**फि86: प्रकारादिद्विरुक्तौ (10.4.86)**

परस्यान्त उदात्तः । पटुपटुः ॥

**फि87: शेषं सर्वमनुदात्तम् (10.4.87)**

शेषमित्यादिद्विरुक्तस्य परमित्यर्थः । प्रप्रायम् । दिवेदिवे ॥

**3708: आद्युदात्तश्च (3.1.3)**

प्रत्यय आद्युदात्त एव स्यात् । अग्निः । कर्तव्यम् ।

**3709: अनुदात्तौ सुप्पितौ (3.1.4)**

पूर्वस्यापवादः । यज्ञस्य । न यो युच्छति (न यो युच्छति) । शप्तिपोरनुदात्तत्वे स्वरितप्रचयौ ।

**3710: चितः (6.1.163)**

अन्त उदात्तः स्यात् ॥ ***चितः सप्रकृतेर्बह्वकजर्थम्*** (वा) ॥ चिति प्रत्यये सति प्रकृतिप्रत्ययसमुदायस्यान्त उदात्तो वाच्य इत्यर्थः । नभन्तामन्यके समे (नभन्तामन्यके समे) । यके सरस्वतीमनु (यके सरस्वतीमनु) । तकत्सुते (तकत्सुते) ।

**3711: तद्धितस्य (6.1.164)**

चितस्तद्धितस्यान्त उदात्तः । पूर्वेण सिद्धे ञित्स्वरबाधनार्थमिदम् । कौञ्जायनाः ।

**3712: कितः (6.1.165)**

कितस्तद्धितस्यान्त उदात्तः । यदाग्नेयः ।

### 3713: तिसृभ्यो जसः (6.1.166)

अन्त उदात्तः । तिस्रोद्यावः सवितुः (ति॒स्रोद्यावः॑ सवि॒तुः) ।

### 3714: सावेकाचस्तृतीयादिर्विभक्तिः (6.1.168)

साविति सप्तमीबहुवचनम् । तत्र य एकाच् ततः परा तृतीयादिर्विभक्तिरुदात्ता । वाचा विरूपः (वा॒चा विरू॑पः) । सौ किम् । राज्ञेत्यादौ एकाचोऽपि राजशब्दात्परस्य माभूत् । राज्ञो नु ते (राज्ञो॒ नु ते॑) । एकाचः किम् । विधते राजनि त्वे (वि॒ध॒ते राज॑नि॒ त्वे) । तृतीयादिः किम् । न ददर्श वाचम् (न द॑दर्श॒ वाच॑म्) ।

### 3715: अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे (6.1.169)

नित्याधिकारविहितसमासादन्यत्र यदुत्तरपदमन्तोदात्तमेकाच् ततः परा तृतीयादिर्विभक्तिरुदात्ता वा स्यात् परमवाचा ।

### 3716: अञ्चेश्छन्दस्यसर्वनामस्थानम् (6.1.170)

अञ्चेः परा विभक्तिरुदात्ता । इन्द्रो दधीचः (इन्द्रो॑ दधी॒चः) । चाविति पूर्वपदान्तोदात्तत्वं प्राप्तम् । तृतीयादिरित्यनुवर्तमाने असर्वनामस्थानग्रहणं शस्परिग्रहार्थम् । प्रतीचो बाहून् (प्र॒ती॒चो बा॒हून्) ।

### 3717: ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः (6.1.171)

एभ्योऽसर्वनामस्थानविभक्तिरुदात्ता । प्रष्ठौहः । प्रष्ठौहा ॥ ***ऊठ्युपधाग्रहणं कर्तव्यम्*** (वा) ॥ इह मा भूत् । अक्षद्युवा (अ॒क्ष॒द्युवा॑) । अक्षद्युवे । इदम् । एभिर्नृभिर्नृतमः (ए॒भिर्नृ॒भिर्नृत॑मः) । अन्वादेशे न । अन्तोदात्तादित्यनुवृत्तेः । न च तत्रान्तोदात्तताप्यस्तीति वाच्यम् । इदमोन्वादेशेऽशनुदात्तस्तृतीयादौ [350] इति सूत्रेणानुदात्तस्य अशो विधानात् । प्रते बभ्रू (प्रते॑ ब॒भ्रू) । मभ्यां गा अनु (मा॒भ्यां गा अनु॑) । पद्दन्नोमास्हृन्निश् [228] इति षट् पदादयः । पद्भ्यां भूमिः (प॒द्भ्यां भूमि॑ः) । दद्भिर्न जिह्वा (द॒द्भिर्न जि॒ह्वा) । अहरहर्जायते मासिमासि (अह॑रहर्जायते मा॒सिमा॑सि) । मनश्चिन्महेहृद आ (मन॑श्चिन्मेहृद आ) । अप् । अपां फेनेन (अ॒पां फेने॑न) । पुम् । अभ्रातेव पुंसः (अ॒भ्रा॒तेव॑ पुं॒सः) । रै । राया वयम् (रा॒या व॒यम्) । रायोधर्ता विवस्वतः (रा॒यो॒ध॒र्ता वि॒वस्व॑तः) । दिव् । उपतत्वाग्ने दिवेदिवे (उप॑त्वाग्ने दिवेदि॑वे) ।

### 3718: अष्टनो दीर्घात् (6.1.172)

शसादिर्विभक्तिरुदात्ता । अष्टाभिर्दशभिः ।

### 3719: शतुरनुमो नद्यजादी (6.1.173)

अनुम् यः शतृप्रत्ययस्तदन्तादन्तोदात्तात्परा नदी अजादिश्च शसादिर्विभक्तिरुदात्ता स्यात् । अच्छा रवं प्रथमा जानती (अच्छा॒ रवं॑ प्र॒थ॒मा जा॑न॒ती) । कृण्वते । अन्तोदात्तात्किम् । दधती ।

अभ्यस्तानामादिः 3673 इत्याद्युदात्तः । अनुमः किम् । तुदन्ती । एकादेशोऽत्र उदात्तः । अदुपदेशात्परत्वाच्छतुः लसार्वधातुक 3730 इति निघातः ।

## 3720: उदात्तयणो हल्पूर्वात् (6.1.174)

उदात्तस्थाने यो यण् हल्पूर्वस्तस्मात्परा नदी शसादिर्विभक्तिश्च उदात्ता स्यात् । चोदयित्री सूनृतानाम् (चो॒द॒यि॒त्री सू॒नृता॑नाम्) । एषा नेत्री (ए॒षा ने॒त्री) । ऋतं देवाय कृण्वते सवित्रे (ऋ॒तं दे॒वाय॑ कृण्व॒ते स॑वि॒त्रे) ।

## 3721: नोङ्धात्वोः (6.1.175)

अनयोर्यणः परे शसादय उदात्ता न स्युः । ब्रह्मबन्ध्वा । सेत्पृशिनः सुभ्वे (सेत्पृ॒श्निः॑ सु॒भ्वे॑) ।

## 3722: ह्रस्वनुड्भ्यां मतुप् (6.1.176)

ह्रस्वान्तादन्तोदात्तान्नुटश्च परो मतुबुदात्तः । यो अब्दि माँउदनिमाँइयर्ति (यो अ॑ब्दि॒माँ उ॑दनि॒माँ इ॒यर्ति॑) । नुटः । अक्षण्वन्तः कर्णवन्तः सखायः (अ॒क्षण्व॑न्तः॒ कर्ण॑वन्तः॒ सखा॑यः) । अन्तोदात्तात्किम् । मात्वा विदषुमान् (मात्वा॑ वि॒द्दि॒षु॑मान्) । स्वरविधौ व्यञ्जनविद्यमानवदित्येतदत्र न । णरुत्वानिन्द्र (म॒रुत्वा॑निन्द्र) । नियुत्वान्वायवा गहि (नि॒यु॒त्वा॑न्वाय॒वा ग॑हि) ॥ रेशब्दाच्च ॥ रेवाँइद्रेवतः (रे॒वाँइ॒द्रे॒व॒तः) ।

## 3723: नामन्यतरस्याम् (6.1.177)

मतुपि यो ह्रस्वस्तदन्तादन्तोदात्तात्परो नामुदात्तो वा । चेतन्ती सुमतीनाम् (चेत॑न्ती सुमती॒नाम्) ।

## 3724: ङ्याश्छन्दसि बहुलम् (6.1.178)

ङ्याः परो नामुदात्तो वा । देवसेनानामभिभञ्जतीनाम् (दे॒व॒से॒नाना॑मभिभञ्जती॒नाम्) । वेत्युक्तेर्नेह । जयन्तीनां मरुतो यन्तु (जय॑न्तीनां म॒रुतो॑ यन्तु) ।

## 3725: षट्त्रिचतुर्भ्यो हलादिः (6.1.179)

एभ्यो हलादिर्विभक्तिरुदात्ता । आषड्भिर्हूयमानः (आ॒ष॒ड्भिर्हू॒यमा॑नः) । त्रिभिष्ट्वं देव (त्रिभिष्ट्वं दे॑व) ।

## 3726: न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः (6.1.182)

एभ्यः प्रागुक्तं न । गवां शता (गवां॑ श॒ता) । गोभ्यो गातुम् (गोभ्यो॑ गा॒तुम्) । शुनश्चिच्छेपम् (शुनः॑श्चिच्छेप॑म्) । सौ प्रथमैकवचने अवर्णान्तात् । तेभ्यो द्युन्नम् (तेभ्यो॑ द्यु॒न्नम्) । तेषां पाहि श्रुधी हवम् (तेषां॑ पाहि श्रु॒धी हव॑म्) ।

## 3727: दिवो झल् (6.1.183)

दिवः परा झलादिर्विभक्तिर्नोदात्ता । द्युभिरक्तुभिः (द्युभि॑र॒क्तुभिः॑) । झलिति किम् । उपत्वाग्ने दिवेदिवे (उप॑त्वाग्ने दि॒वेदि॑वे) ।

## 3728: नृ चान्यतरस्याम् (6.1.184)

नुः परा झलादिर्विभक्तिर्वोदात्ता । नभिर्येमानः (नृभि॑र्येमा॒नः) ।

## 3729: तित्स्वरितम् (6.1.185)

निगदव्याख्यातम् । क्वनूनम् (क्व॑नू॒नम्) ।

## 3730: तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः (6.1.186)

अस्मात्परं लसार्वधातुकमनुदात्तं स्यात् । तासि । कर्ता । कर्तारौ । कर्तारः । प्रत्ययस्वरापवादोऽयम् । अनुदात्तेत् । य आस्ते । ङितः । अभिचष्टे अनृतेभिः (अ॒भिच॑ष्टे अनृ॑तेभिः) । अदुपदेशात् । पुरुभुजा चनस्यतम् (पुरु॑भुजा च॒नस्य॑तम्) । चित्स्वरोऽप्यनेन बाध्यते । वर्धमानं स्वे दमे (वर्ध॑मानं॒ स्वे दमे॑) । तास्यादिभ्यः किम् । अभि वृधे गृणीतः (अ॒भि वृधे गृ॑णी॒तः) । उपदेशग्रहणान्नेह । हतो वत्राण्यार्या (ह॒तो वृत्राण्यार्या॑) । लग्रहणं किम् । कितीह पचमानाः । सार्वधातुकं किम् । शिश्ये । अन्ह्विङोः किम् । ह्नुते । यदधीते ॥ ***विन्दीन्धिखिदिभ्यो नेति वक्तव्यम्*** (वा) ॥ इन्धे राजा (इ॒न्धे राजा॑) । एतच्च अनुदात्तस्य च यत्र-[3651] इति सूत्रे भाष्ये स्थितम् ।

## 3731: आदिः सिचोऽन्यतरस्याम् (6.1.187)

सिजन्तस्यादिरुदात्तो वा । यासिष्टं वर्तिरश्विना (या॒सि॒ष्टं व॒र्तिर॑श्विना) ।

## 3732: थलि च सेटीडन्तो वा (6.1.196)

सेटि थलन्ते पदे इडुदात्तः अन्तो वा आदिर्वा स्यात् । यदा नैते त्रयस्तदा लिति [3676] इति प्रत्ययात्पूर्वमुदात्तं स्यात् । लुलविथ । अत्र चत्वारोऽपि पर्यायेणोदात्ताः ।

## 3733: उपोत्तमं रिति (6.1.297)

रित्प्रत्ययान्तस्योपोत्तममुदात्तं स्यात् । यदाहवनीये ॥

## 3734: समासस्य (6.1.223)

अन्तः उदात्तः स्यात् । यज्ञश्रियम् (य॒ज्ञ॒श्रियम्॑) ।

## 3735: बहुव्रीहौ प्रकृत्या पूर्वपदम् (6.2.1)

उदात्तस्वरितयोगि पूर्वपदं प्रकृत्या स्यात् । सत्यश्चित्रश्रवस्तमः (स॒त्यश्चि॒त्रश्र॑वस्तमः) । उदात्तेत्यादि किम् । सर्वानुदात्ते पूर्वपदे समासान्तोदात्तत्वमेव यथा स्यात् । समपादः ।

## 3736: तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः (6.2.2)

### 3966: चवायोगे प्रथमा (8.1.59)

चवेत्याभ्यां योगे प्रथमा तिङ्विभक्तिर्नानुदात्ता । गाश्च चारयति वीणां वा वादयति । इतो वा सातितीमहे (इ॒तो वा॑ सा॒तिमीम॑हे) । उत्तरवाक्ययोरनुषञ्जनीयतिङन्तापेक्षयेयं प्राथमिकी । योगे किम् । पूर्वभूतयोरपि योगे निघातार्थम् । प्रथमाग्रहणं द्वितीयादेस्तिङन्तस्य मा भूत् ।

### 3967: हेति क्षियायाम् (8.1.60)

हयुक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता धर्मव्यतिक्रमे । स्वयं हरथेन याति 3 उपाध्यायं पदातिं गमयति3 । क्षियाशीः-[3623] इति प्लुतः ।

### 3968: अहेति विनियोगे च (8.1.61)

अहयुक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता नानाप्रयोगे नियोगेक्षियायां च । त्वमह ग्रामं गच्छ । क्षियायाम् । स्वयमहरथेन याति3 उपाध्ययं पदातिं नयति ।

### 3969: चाहलोप एवेत्यवधारणम् (8.1.62)

च अह एतयोर्लोपे प्रथमा तिङ्विभक्तिर्नानुदात्ता देव एव ग्रामं गच्छतु । देव एवारण्यं गच्छतु । ग्रामरण्यं च गच्छत्वित्यर्थः । देव एवं ग्रामं गच्छतु । राम एवारण्यं गच्छतु । ग्रामं केवलमरण्यं केवलं गच्छत्वित्यर्थं । इहाहलोपः । स च केवलार्थः । अवधारणं किम् । देव क्वेव भोक्ष्यसे । न क्विचिदित्यर्थः । अनवक्लृप्तावेव ।

### 3970: चादिलोपे विभाषा (8.1.63)

चवाहाहैवानां लोपे प्रथमा तिङ्विभक्तिर्नानुदात्ता । चलोपे । इन्द्रवाजेषु नोऽव (इन्द्र॒वाजे॑षु नोऽव) । शुक्ला व्रीहयो भवन्ति । श्वेता गा आज्याय दुहन्ति । वालोपे । व्रीहिभिर्यजेत । यवैर्यजेत ।

### 3971: वैवावेति च छन्दसि (8.1.64)

अहर्वै देवानामासीत् । अयं वाव हस्त आसीत् ।

### 3972: एकान्याभ्यां समर्थाभ्याम् (8.1.65)

आभ्यां युक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता छन्दसि । अजामेकां जिन्वति । अजामेकां रक्षति । तयोरन्यः पिप्पलं स्वाद्वति (तयो॑र॒न्यः पिप्प॑लं स्वा॒द्वत्ति॑) । समर्थाभ्यां किम् । एको देवानुपातिष्ठत् । एक इति संख्यापरं नान्यार्थम् ।

### 3973: यद्वृत्तान्नित्यम् (8.1.66)

यत्र पदे यच्छब्दस्ततः परं तिङन्तं नानुदात्तम् । यो भुङ्क्ते यदद्यङ्गायुर्वाति । अत्र व्यवहिते कार्यमिष्यते ।

### 3974: पूजनात्पूजितमनुदात्तं काष्ठादिभ्यः (8.1.67)

पूजनेभ्यः काष्ठादिभ्यः पूजितवचनमनुदात्तम् । काष्ठाध्यापकः ॥ ***मलोपश्च वक्तव्यः*** (वा) ॥ दारुणाध्यापकः । अज्ञाताध्यापकः । समासान्तोदात्तत्वापवादः । एतत्समासे इष्यते । नेह । दारुणमध्यापक इति वृत्तिमतम् । पूजनादित्येव पूजितग्रहणे सिद्धे पूजितग्रहणमनन्तरपूजितलाभार्थम् । एतदेव ज्ञापकमत्र प्रकरणे पञ्चमी निर्देशेऽपि नानन्तर्यमाश्रीयत इति ।

## 3975: सगतिरपि तिङ् (8.1.68)

पूजनेभ्यः काष्ठादिभ्यस्तिङन्तं पूजितमनुदात्तम् । यत्काष्ठां प्रपचति । तिङ्ङतिङः [3935] इति निघातस्य निपातैर्यत्- [3937] इति निषेधे प्राप्ते विधिरयम् । सगतिग्रहणाच्च गतिरपि निहन्यते ॥ ***गतिग्रहणे उपसर्गग्रहणमिष्यते*** (वा) ॥ नेह । यत्काष्ठां शुक्लीकरोति ।

## 3976: कुत्सने च सुप्यगोत्रादौ (8.1.69)

कुत्सने च सुबन्ते परे सगतिरगतिरपि तिङनुदात्तः । पचति पूति । प्रपचति पूति । पचति मिथ्या । कुत्सने किम् । प्रपचति शोभनम् । सुपि किम् पचतिक्लिश्नाति । अगोत्रादौ किम् । पचति गोत्रम् ॥ क्रियाकुत्सन इति वाच्यम् ॥ कर्तुः कुत्सने मा भूत् । पचति । पूतिर्देवदत्तः ॥ ***पूतिश्चानुबन्ध इति वाच्यम्*** (वा) ॥ तेनायं चकारानुबन्धत्वादन्तोदात्तः ॥ ***वा बह्वर्थमनुदात्तमिति वाच्यम्*** (वा) ॥ पचन्ति पूति ।

## 3977: गतिर्गतौ (8.1.70)

अनुदात्तः । अभ्युद्धरति । गतिः किम् । दत्तः पचति । गतौ किम् । आमन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः (आम॒न्द्रैरि॑न्द्र॒ हरि॑भिर्या॒हि म॒यूर॑रोमभिः) ।

## 3978: तिङि चोदात्तवति (8.1.71)

गतिरनुदात्तः । यत्प्रपचति । तिङ्ग्रहणमुदात्तवतः परिमाणार्थम् । अन्यथा हि यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गतिस्तत्र धातावेवोदात्तवति स्यात् प्रत्यये न स्यात् । उदात्तवति किम् । प्रपचति ॥ इति तिङन्तस्वराः ॥ अथ वैदिकवाक्येषु स्वरसञ्चारप्रकारः कथ्यते- 'अग्निमीळे' इति प्रथमर्क् । तत्राग्निशब्दोऽव्युत्पत्तिपक्षे 'फिष..' (फिट् १) इत्यनोदात्त इति माधवः । वस्तुतस्तु घृतादित्वात् । व्युत्पत्तौ तु निप्रत्ययस्वरेण । अम्सुत्वादनुदात्तः । अमि पूर्वः [194] इत्येकादेशस्तु एकादेश उदात्तेन [3658] इत्युदात्तः । ईळे । तिङ्ङतिङः [3135] इति निघातः । संहितायां तु उदात्तादनुदात्तस्य [3660] इतीकारः स्वरितः । स्वरितात्संहितायाम् [3668] इति 'ळ' इत्यस्य प्रचयापरपर्याया एकश्रुतिः । पुरःशब्दोऽन्तोदात्तः 'पूर्वाधरावराणाम्-' [1975] इत्यसिप्रत्ययस्वरात् । हितशब्दोऽपि धाञो निष्ठायाम् दधातेर्हिः [3076] इति ह्यादेशे प्रत्ययस्वरेणान्तोदात्तः । पुरोऽव्ययम् [768] इति गतिसंज्ञायां कुगति- [761] इति समासे समासान्तोदत्ते तत्पुरुषे तुल्यार्थ- [3736] इत्यव्ययपूर्वपदप्रकृतिस्वरे गतिकारकोपपदात्कृत् [3873] इति कृदुत्तरपदप्रकृतिस्वरे थाथादिस्वरे च पूर्वपूर्वोपमर्देन प्राप्ते गतिरनन्तरः [3783] इति पूर्वपदप्रकृतिस्वरः । पुरःशब्दोकारस्य

संहितायां प्रचये प्राप्ते उदात्तस्वरितपरस्य सन्नतरः [3669] इत्यनुदात्ततरः । यज्ञस्य । नङः प्रत्ययस्वरः । विभक्तेः सुप्त्वादनुदात्तत्वे स्वरितत्वम् । देवम् । पचाद्यच् । फिद्वरेण प्रत्ययस्वरेण चित्स्वरेण वान्तोदात्तः । ऋत्विक्छब्दः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः । होतृशब्दस्तृन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः । रत्नशब्दो नब्विषयस्य (फिट् २६) इत्याद्युदात्तः । रत्नानि दधातीति रत्नधाः । समासस्वरेण कृदुत्तरपदप्रकृतिस्वरेण वान्तोदात्तः । तमपः पित्त्वादनुदत्तत्वे स्वरितप्रचयावित्यादि यथाशास्त्रमुन्नेयम् ।

*। इति स्वरप्रकरणम् ।*

# प्रकरणसूची



***